August. 1910.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

[CO]LLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 152.

वेदान्तपारिजातसौरभं

नाम

# ब्रह्ममीमांसाभाष्यम्

श्रीनिम्बार्काचार्यविरचितम् ।

# BRAHMA-MÎMÂMSÂ-BHÂSHYA,

A Commentary on Brahma Sutras
Called Vedânta Pârijâta Saurabha

by

NIMBÂRKÂCHÂRYA.

EDITED BY

PANDIT VINDHYESHVARÎPARSÂDA DVIVEDIN

LIBRARIAN, GOVERNMENT SANSKRIT COLLEGE, BENARES.



*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT.

BENARES:

AGENTS:- OTTO HARRASSOWITZ, LEIPZIG:
PAṆḌITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Hari Krishna Dâsa Gupta*
PROPRIETOR, AT THE VIDYÂ VILÂSA PRESS.
BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः— १५२

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकःस्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् „ „ १ „ ०

६ प्रापणव्ययः पृथग् नास्ति ।

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाष्यभाषा प्रकाशसहितम् । सं० (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः ) १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्ट विरचितः । तर्कपादः ( मीमांसा ) २

वेदान्तपारिजातसौरभं

नाम

# ब्रह्ममीमांसाभाष्यम् ।

श्रीनिम्बार्काचार्यप्रणीतम् ।



वाराणसीस्थराजकीयसंस्कृतपाठशालीय-
पुस्तकालयाध्यक्षेण

पण्डितविन्ध्येश्वरीप्रसादद्विवेदिना

संस्कृतम् ।



वाराणस्याम् ।

बा बू श्री ह रि कृ ष्ण दा स गु प्ते न
विद्याविलासयन्त्रालये
१९६७ विक्रमवर्षे
मुद्रितम् ।

॥ श्रीः ॥

ॐ नमः परमात्मने ।

वेदान्तपारिजातसौरभस्य

# भूमिका ।

---

श्रीशङ्कराचार्यभास्कराचार्यादि(१)प्रणीतेष्वनेकेषु महत्सु ब्रह्ममीमांसापरपर्यायशारीरकमीमांसाभाष्येषूपलब्धेष्वपि मतभेदमाश्रित्य प्रणीतानां दर्शनान्तरत्वेन प्रसिद्धानां(२) भाष्याणां साञ्जिघृक्षूणां वेदान्तविचारासि-

---

(१) श्रीशङ्कराचार्यैर्ब्रह्मसूत्रभाष्ये ३ अध्याये ३ पादे "एक आत्मनः शरीरे भावात्" ५३ सूत्रव्याख्याने 'भगवता उपवर्षेण ब्रह्मसूत्रवृत्तिः' कृतेति सूचितं टीकाकारेण च व्याख्यातम् । तैरेव बृहदारण्यकभाष्ये आरम्भ एव भर्तृप्रपञ्चाख्यं भाष्यं सूचितं टीकाकारेण च व्याख्यातं चेति ॥

गौडपादीति प्रसिद्धं कारिकाबद्धं गौडपादाचार्यकृतं शारीरकसूत्रभाष्यमपि शाङ्करभाष्यात् पुरातनं वर्तते नैतच्चित्रं माण्डूक्योपनिषदो गौडपादाचार्यैः कृताः कारिकाः शङ्कराचार्या व्याख्यातवन्त इति ॥

श्रीरामानुजाचार्याः श्रीभाष्ये " भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः ।" "तदाह वृत्तिकारः संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेने"त्यादि । जगच्छरीरः आत्मा शारीरः तमधिकृत्य प्रवर्तमानं शास्त्रं शारीरकमित्युच्यत इति तदर्थः ।

(२) सर्वदर्शनसंग्रहे माधवाचार्येण रामानुजदर्शनं माध्वदर्शना-

कानां प्रमोदायेदानीं वैष्णवशैवसौरादि(१)प्रभेदभिन्नान्यनेकानि भाष्याणि मुद्रितानि प्रकाशितानि जातानीति सुविदितमस्ति विदुषाम् । किन्तु वैष्णवेष्वपि सम्प्रदायधुरन्धरैश्चतुर्भिः श्रीविष्णुस्वामि(२)श्रीरामानुजाचार्यश्रीनिम्बार्काचार्यश्रीमध्वाचार्यैः(३) प्रणीतानि भाष्याणि प्रधानानीति वदन्ति तत्सम्प्रदायविदः। तेषु सव्याख्यानानि त्रीणि मुद्रितानि प्रकाशितानीति मनसि विचार्य श्रीनिम्बार्काचार्यप्रणीतस्य भाष्यस्यान्वेषणे कृते तस्यैकं पुरातनं पुस्तकं वाराणस्यामेवोपलब्धवान् ततः परं वाराणसीमधितिष्ठता पादरीश्रीजानसनमहाशयेनाप्येकं तत्पुस्तकं नवीनं नातिशुद्धं दत्तं तेनैव प्रोत्साहितोऽहमस्यां चौखम्बासंस्कृतसीरीजनामिकायां पुस्तकश्रेण्यां मुद्रणद्वारा प्रकाशयितुमुद्यतः। उपक्रान्ते चास्य मुद्रणे सम्पन्ने चाद्यध्यायद्वये वृन्दावनधाम्नि देवकीनन्दनयन्त्रालये

---

परपर्यायं पूर्णप्रज्ञदर्शनमित्युक्तम् ।

(१) श्रीकण्ठशिवाचार्येण शक्तिविशिष्टाद्वैतपरं शैवभाष्यं प्रणीतम्।

(२) विष्णुस्वामिसम्प्रदायान्तर्गत एव वल्लभाचार्यसम्प्रदाय इति आर्यविद्यासुधाकरे।

(३) विष्णुस्वामी प्रथमतो निम्बादित्यो द्वितीयकः ।
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजस्तथा ॥

इति भविष्यपुराणपरिशिष्टे दृश्यते । विवृतं चेदं वचनं तार्किकरक्षाभूमिकायामस्माभिः ।

निम्बार्कदर्शननाम्ना मुद्रितं श्रीनिम्बार्काचार्यकृतं वेदान्तपारिजातसौरभाख्यं भाष्यं श्रीनिवासाचार्यकृतभाष्यभावार्थप्रकाशकवेदान्तकौस्तुभसहितं श्रीकेशवभट्टकाश्मीरिविरचितवेदान्तकौस्तुभप्रभाख्यव्याख्यानोद्भासितमुपलब्धवान् । यद्यपि भ्रान्तेः पुरुषधर्मत्वात् पुस्तकेषु पाठापपाठभेदाः शुद्ध्यशुद्धिभेदाश्च तिष्ठन्त्येव तथाप्युपलब्धपुस्तकानां संवादेन संशोध्य मुद्रितमिदं पुस्तकम् । अत्र यावता श्रमेण परिशुद्धिसम्भवस्तावान् मया परिश्रमः कृतः पाठभेदाश्चापि टिप्पण्यां प्रदर्शिताः किन्तु "भ्रान्तेः पुरुषधर्मत्वात्"भ्रमान्मुद्राप्रमादादिभ्यश्च जातमवशिष्टं स्खलितं दयालुभिर्विद्वद्भिर्गुणैकपक्षपातिभिरादर्शान्तरसंवादेन परिहरणीयं क्षन्तव्यं चेति भूयोभूय एवाभ्यर्थयत इति ।

श्रीनिम्बार्काचार्याणामाविर्भावनिरूपणे तत्सम्प्रदायविद एवमाहुः । सनकादिमहर्षिभ्यो ब्रह्मज्ञानं दातुं भगवान् हंसरूपेणावतीर्णस्तदनुचरो महर्षिर्नारदस्तस्य शिष्यो निम्बार्काचार्यः। अयं च अरुणिमुनेर्जयन्त्यां श्रीविष्णोः सुदर्शनापरपर्यायस्य चक्रस्यावतारात्मना जातः। निम्बार्काचार्यस्य शिष्यः श्रीनिवासाचार्यस्तु श्रीविष्णोः पाञ्चजन्यापरपर्यायस्य शङ्खस्यावतार इति ।

किं तु सम्प्रदायप्रदीपे गुर्जराधिपतेः कुमारपालस्य राज्ञो राज्यसमये मध्वाचार्यस्य समुद्भववर्णनम्। मेरुतुङ्गाचार्येण च प्रबन्धचिन्तामणौ प्रतिपादितं ११९९ विक्रमवर्षे कुमारपालस्य राज्ञो राज्याभिषेकः समभवत्। अपि च भविष्यपुराणपरिशिष्टस्थेन प्रदर्शितवचनेन प्रथमतो विष्णुस्वामी ततो निम्बार्काचार्यस्ततो मध्वाचार्यः समभवदिति ११९९ विक्रमीयवर्षेभ्यः पूर्वं विष्णुस्वामिसमयात् १०४१ विक्रमीयसंवत्सरात् तदासन्नाद्वा पश्चान्निम्बार्काचार्यस्य(१) स्थितिरासीदित्यनुमीयत इति॥

---

(१) एकदा निम्बार्काचार्यस्य ग्रामे कश्चिद्दण्डी समागतः स चाचार्येण भोजनार्थं निमन्त्रितः किन्तु भोज्यवस्तुसम्पादने कृते एव सायमभूदिति दण्डी अब्रवीदहं रात्रौ भोजनं न करिष्यामीति आचार्यः कृष्णं भगवन्तमचिन्तयदिति ततो भगवता कृष्णेन अस्ताचले सूर्यात्मना सुदर्शनं चक्रं स्थापितमित्याचार्यः स्वाश्रमस्थं महानिम्बवृक्षमारुह्य संन्यासिने सूर्यं सन्दर्श्य तं भोजितवान् स च दण्डी प्राह रात्रावपि निम्बवृक्षस्थेन भवता सूर्यो दर्शितो भोजितश्चाहमिति भवान् निम्बार्काचार्यनाम्ना प्रसिद्धिं गमिष्यतीति भक्तमालायां २२ सर्गे दृश्यत इति।

गवर्नमेण्टसंस्कृतकालेज<br>पुस्तकालय<br>बनारस<br>२० जुलाई १९०९ } विन्ध्येश्वरीप्रसादद्विवेदी

ॐ नमः परमात्मने ।

# वेदान्तपारिजातसौरभं

नाम

## ब्रह्ममीमांसाभाष्यम् ।

श्रीनिम्बार्काचार्यविरचितम् ।

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अथाधीतषडङ्गवेदेन कर्मफलक्षयाक्षयत्वविषयक(१) विवेकप्रकारकवाक्यार्थजन्यसंशयाविष्टेन तत एव जिज्ञासितधर्ममीमांसाशास्त्रेण तन्निश्चितकर्मतत्प्रकारतत्फलविषयकज्ञानवता कर्मब्रह्मफलसान्तत्वानन्तत्वसातिशयत्वनिरतिशयत्वविषयकव्यवसायजातनिर्वेदेन भगवत्प्रसादेप्सुना तद्दर्शनेच्छालम्पटेनाचार्यैकदेवेन श्रीगुरुभक्त्येकहार्देन मुमुक्षुणानन्ताचिन्त्यस्वाभाविकस्वरूपगुणशक्त्यादिभिर्बृहत्तमो यो रमाकान्तः पुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेत्युपक्रमवाक्यार्थः ॥ १ ॥

### जन्माद्यस्य यतः ॥ २ ॥

तल्लक्षणापेक्षायां सिद्धान्तमाह अस्याचिन्त्यविचित्रसंस्थानसम्पन्नस्यासंख्येयनामरूपादिविशेषाश्रयस्य चिदचिद्रूपस्य विश्वस्य सृष्टिस्थितिलया यस्मात् सार्वज्ञ्याद्यनन्तगुणाश्रयाद्ब्रह्मेशकालादिनियन्तुर्भगवतो भवन्ति तदेव पूर्वोक्तनिर्वचनविषयं ब्रह्मेति(२) लक्षणवाक्यार्थः ॥ २ ॥

### शास्त्रयोनित्वात् ॥ ३ ॥

किंप्रमाणकमित्याकाङ्क्षायां सिद्धान्तमाह । शास्त्रमेव योनिस्तज्ज्ञप्तिकारणं यस्मिंस्तदेवोक्तलक्षणलक्षितं वस्तु ब्रह्मशब्दाभिधेयमिति ॥ ३ ॥

---

(१) कर्मफलक्षयाक्षयविषयकेति साधुः पाठः । (२) निर्वचनविषयो ब्रह्मेति साधीयान् पाठः ।

## तत्तु समन्वयात् ॥ ४ ॥

ननु समस्तस्यापि वेदस्य क्रियापरत्वेन तद्भिन्नविषयकाणां वेदान्तवाक्यानामप्यर्थवादवाक्यानां तत्प्राशस्त्यप्रतिपादनद्वारा परम्परया विधिवाक्यैकवाक्यतावत् क्रत्वङ्गकर्तृप्राशस्त्यप्रतिपादनेन विध्यैक्यपरत्वात् कथमिव शास्त्रैकप्रमाणकं ब्रह्मेति प्राप्ते राद्धान्तः। तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव न कर्मादि तत्रैव प्रतिपादकतया कृत्स्नस्यापि वेदस्य समन्वयात् मुख्यवृत्त्यान्वयः समन्वयस्तस्मात्। यद्वा वेदेषु तस्यैव प्रतिपाद्यतया समन्वयादिति सङ्क्षेपः। न च कर्मणि तत्समन्वयो वक्तुं शक्यः तस्य तु विविदिषोत्पादनेनैव नैराकाङ्क्ष्यात्। क्रत्वङ्गं ब्रह्मेति, तु बालभाषितम् तस्य सर्वकर्मकर्त्रादिकारकनियन्तृत्वेन स्वातन्त्र्यात् तत्फलदातृत्वाच्च। प्रत्युत कर्मण एव विविदिषोत्पादनेन परम्परया तत्प्राप्तिसाधनीभूतज्ञानोत्पत्त्युपकारकत्वेन समन्वय इति निश्चीयते विविदिषाश्रुतेः। ननु प्रत्यक्षादिप्रमाणाविषयकत्ववच्छब्दप्रमाणाविषयकत्वस्यापि श्रुतिसिद्धत्वान्न शास्त्रैकप्रमेयं ब्रह्मेति प्राप्ते ब्रूमः जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकं समस्तश्रुतीनां साक्षात् परम्परया वा तत्रैव समन्वयात्। तत्र लक्षणप्रमाणादिवाक्यानां स्वत एव तद्विषयकत्वेन शाण्डिल्यपञ्चाग्निमधुविद्यादिवाक्यानां प्रतीकादिप्रकारकाणां च परम्परया समन्वयः। यद्वा सर्वेषामपि वाक्यानां भिन्नप्रवृत्तिनिमित्तकत्वे ऽपि साक्षादेव ब्रह्मणि समन्वयः। तत्तद्वाक्यविषयाणां सर्वेषामपि ब्रह्मात्मकत्वाविशेषेण मुख्यवाच्यत्वात्। न चैवं विषयत्वनिषेधपराणां बाधः शङ्कनीयस्तेषां ब्रह्मस्वरूपगुणादिविषयकेयत्तानिषेधपरत्वेन सविषयत्वात्। किञ्चात्र प्रष्टव्यो भवान् शब्दाविषयं ब्रह्मेति(१)वाक्यस्य वाच्यं ब्रह्माभिप्रेतं न वेति। आद्ये वाच्यत्वसिद्धेरवाच्यत्वप्रतिज्ञाभङ्गः। द्वितीये सुतरां वाच्यतेति। तस्मात् सर्वज्ञः सर्वाचिन्त्यानन्तशक्तिर्विश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयस्तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः ॥ ४ ॥

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

सांख्याभिमतमचेतनं प्रधानं तु अशब्दम् श्रुतिप्रमाणवर्जि-

(१) अत्रापि 'शब्दाविषयो ब्रह्मेति' साधीयान्।

तम् अतो नैव जगत्कारणम् । जगत्कर्तुश्चेतनधर्मस्येक्षणस्य श्रवणात् ॥ ५ ॥

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

गौण्यपीक्षतिरयुक्ता कुतः आत्मशब्दात् ॥ ६ ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

सदीक्षित्रात्मादिपदार्थभूतकारणनिष्ठस्य विदुषस्तद्भावापत्तिलक्षणमोक्षोपदेशान्न प्रधानं सदात्मशब्दवाच्यम् ॥ ७ ॥

हेयत्वावचनाच्च ॥ ८ ॥

सर्वज्ञेन हितैषिणा सदादिशब्दैरुपदिष्टस्याचेतनस्य मोक्षे हेयस्य हेयत्वमवश्यं वक्तव्यमुपदेशप्रयोजनं च वक्तव्यम् तदुभयवचनाभावान्न सदादिपदवाच्यं प्रधानम् ॥ ८ ॥

प्रतिज्ञाविरोधात् ॥ ९ ॥(१)

किञ्चैकविज्ञानात् सर्वविज्ञानप्रतिज्ञाविरोधादपि नाऽचेतनकारणवादः साधुः ॥ ९ ॥

स्वाप्ययात् ॥ १० ॥

सच्छब्दार्थं जगत्कारणं प्रकृत्य स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवतीत्यादिनोक्तस्याप्ययस्य चेतनसम्बन्धिनो ब्रह्मण्येव सम्भवात् ब्रह्मैव जगत्कारणं युक्तम् ॥ १० ॥

गतिसामान्यात् ॥ ११ ॥

सर्वेषु वेदान्तेषु चेतनकारणावगतेस्तुल्यत्वात् अचेतनकारणवादो नहि युक्तः ॥ ११ ॥

श्रुतत्वाच्च ॥ १२ ॥

तस्मात् सदादिशब्दाभिधेयस्य सर्वज्ञस्य सर्वनियन्तुः सर्वेश्वरस्य

(१) प्रतिज्ञाविरोधादितिसूत्रं यद्यपि शाङ्करभाष्यभामत्योर्नैवास्ति तथापि श्रीभाष्ये परिगृहीतं तथैव स्वयमपि व्याख्यातं च ।

चेतनत्वेन कारणत्वस्य श्रुतत्वान्न प्रधानग्रहः ॥ १२ ॥

आनन्दमयोऽभ्यासात् ॥ १३ ॥

आनन्दमयः परमात्मैव न तु जीवः कुतः परमात्मविषयकानन्दपदाभ्यासात् ॥ १३ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १४ ॥

विकारार्थे मयट्श्रवणान्नानन्दमयः परमात्मेति चेत् न कस्मात् प्राचुर्यार्थकस्यापि मयटः स्मरणात् ॥ १४ ॥

तद्धेतुव्यपदेशाच्च ॥ १५ ॥

जीवानन्दहेतुत्वादपि परमात्मैवानन्दमयः ॥ १५ ॥

मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रप्रोक्तं मान्त्रवर्णिकं तदेवानन्दमयशब्देन गीयते ॥ १६ ॥

नेतरोऽनुपपत्तेः ॥ १७ ॥

आनन्दमयपदार्थमुद्दिश्य श्रूयमाणानां तदसाधारणधर्माणां तदितरस्मिन्ननुपपत्तेरितरो जीवो नानन्दमयपदार्थः ॥ १७ ॥

भेदव्यपदेशाच्च ॥ १८ ॥

रसं ह्येवायं लब्ध्वानन्दी भवतीति वाक्येन लब्धृलब्धव्ययोर्भेदव्यपदेशाज्जीवो नानन्दमयः ॥ १८ ॥

कामाच्च नानुमानापेक्षा ॥ १९ ॥

प्रत्यगात्मनः कारणत्वस्वीकारे ऽनुमानस्य प्रधानस्य कारणादिरूपस्यापेक्षा भवेत् कुलालादेर्घटादिजनने मृदाद्यपेक्षावत् प्रकृतस्यानन्दमयस्य सर्वशक्तेः पुरुषोत्तमस्य तु न । कुतः कामात् सङ्कल्पादेव सोऽकामयत बहु स्यामित्यादिश्रुतेरतस्तद्भिन्न आनन्दमयः ॥ १९ ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

तद्योगमानन्दयोगं शास्ति श्रुतिः । रसो वै सः रसं ह्येवायं लब्ध्वा-

नन्दी भवतीति जीवस्य यल्लाभादानन्दयोगः स तस्मादन्य इति सिद्धम् ॥ २० ॥

अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

आदित्याक्ष्णोरन्तःस्थो मुमुक्षुध्येयो हि परमात्मैव न तु जीवविशेषः कुतः तस्यैवापहतपाप्मत्वसर्वात्मत्वादीनां धर्माणामुपदेशात् ॥ २१ ॥

भेदव्यपदेशाच्चान्यः ॥ २२ ॥

आदित्यादिजीववर्गान्नदन्तर्गोऽन्योऽस्ति परमात्मा कुतः आदित्ये तिष्ठन्नित्यादिना भेदव्यपदेशात् ॥ २२ ॥

आकाशस्तल्लिङ्गात् ॥ २३ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्यत्राकाशशब्दवाच्यः परमात्मा कुतः सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति सर्वस्रष्टृत्वादितल्लिङ्गात् ॥ २३ ॥

अत एव प्राणः ॥ २४ ॥

सर्वाणि ह वा इमानि भूतानि प्राणमेव संविशन्ति प्राणमभ्युज्जिहते इत्यत्रापि संवेशनोद्गमनरूपाद्ब्रह्मलिङ्गात् परमात्मैव प्राणः ॥२४॥

ज्योतिश्चरणाभिधानात् ॥ २५ ॥

दिवो ज्योतिरिति ज्योतिर्ब्रह्मैव पादोऽस्य सर्वा भूतानीति चरणाभिधानात् ॥ २५ ॥

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथाहि दर्शनम् ॥ २६ ॥

पूर्ववाक्ये गायत्र्याख्यच्छन्दोभिधानात् तत्परा चरणश्रुतिरस्तु न ब्रह्मपरेति चेन्न गुणयोगाद्गायत्रीशब्दाभिधेये भगवति चित्तार्पणाभिधानात् । दृष्टश्च विराट्शब्दः कृतपरः ॥ २६ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

न केवलं तथा चेतोर्पणनिगमाद्गायत्री ब्रह्मेत्युच्यते भूतपृथिवीशरीरहृदयानां ब्रह्मणि भगवत्युपपत्तेश्चैवम् ॥ २७ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

पूर्वमधिकरणत्वेन पुनरवधित्वेन द्यौर्निर्दिश्यते इत्युपदेशभेदान्न ब्रह्म प्रत्यभिज्ञायते इति न कुतः, उभयत्रापि ब्रह्मण एकत्वस्याविरोधात् ॥ २८ ॥

प्राणस्तथानुगमात् ॥ २९ ॥

प्राणोस्मीत्यादिवाक्ये प्राणादिशब्दवाच्यः परमात्मा हिततमत्वानन्तत्वादिधर्माणां परमात्मपरिग्रहेऽवगमात् ॥ २९ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

प्राणादिशब्दवाच्यं ब्रह्म न भवति कुतः मामेव विजानीहीति वक्तृस्वरूपाभिन्नोपदेशादिति चेत् । अस्मिन् प्रकरणे परमात्मसम्बन्धस्य बाहुल्यमस्त्यतः प्राणेन्द्रादिपदार्थः परमात्मैव ॥ ३० ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥

इन्द्रो हि सर्वस्य ब्रह्मात्मकत्वमवधार्य मामेव विजानीहीति शास्त्रदृष्ट्या युक्तमुक्तवान् । तत्र कः शोकः को मोह एकत्वमनुपश्यत इत्यादिशास्त्रम् । यथाऽहं मनुरभवं सूर्यश्चेति वामदेव उक्तवान् तद्वत् ॥ ३१ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत् नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

न वाचं विजिज्ञासीत वक्तारं विद्यात्त्रिशीर्षाणं त्वाष्ट्रमवाहनमित्यादिजीवलिङ्गात् प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति मुख्यप्राणलिङ्गाच्च नात्र ब्रह्मपरिग्रह इति चेत् न उपासकतारतम्येन ब्रह्मोपासनायास्त्रैविध्याज्जीववर्गान्तर्यामित्वेन प्राणाद्यचेतनान्तर्यामित्वेन तदुभयवैलक्षण्येन चान्यत्राश्रितत्वादिहापि तद्योगात् ॥ ३२ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे प्रथमाध्यायस्य
प्रथमः पादः ॥ १ ॥

## सर्वत्रप्रसिद्धोपदेशात् ॥ १ ॥

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इत्युपक्रम्य श्रूयते मनोमयः प्राणशरीर इति । अत्र मनोमयत्वेनोपास्यः सर्वकारणभूतः परमात्मा गृह्यते न प्रत्यगात्मा कुतः सर्वेषु वेदान्तेषु प्रसिद्धस्य परमात्मन एव पूर्वत्र सर्वं खल्विदं ब्रह्मेत्याद्युपदेशात् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प इत्यादिना विवक्षितानां मनोमयत्वसत्यसङ्कल्पत्वादीनां गुणानां ब्रह्मण्येवोपपत्तेश्च ॥२॥

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

मनोमयत्वादिगुणकः पर एव न तु जीवस्तस्मिन् मनोमयत्वसत्यसङ्कल्पत्वाद्यनुपपत्तेः ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतोऽप्यत्र मनोमयादिपदवाच्यो न शारीरः एतमितः प्रेत्याभिसम्भवितास्मीति कर्मकर्तृव्यपदेशात् ॥ ४ ॥

## शब्दविशेषात् ॥ ५ ॥

मनोमयत्वादिगुणकः शारीरादन्यः परमात्मा एष म आत्मान्तर्हृदये इति जीवपरमात्मनोः षष्ठीप्रथमान्तरूपशब्दविशेषात् ॥ ५ ॥

## स्मृतेश्च ॥ ६ ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीतिस्मृतेश्च जीवपरमात्मनोर्भेदोऽस्ति ॥ ६ ॥

## अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेत् न निचाय्य-

## त्वादेवं व्योमवच्च ॥ ७ ॥

एष म आत्मान्तर्हृदये इत्यल्पायतनत्वात् अणीयान् व्रीहेर्वेत्यल्पत्वव्यपदेशाच्चात्र न ब्रह्मेति चेत् नैवं तथात्वेन ब्रह्मण इहोपास्यत्वात् । बृहतोऽल्पत्वं तु गवाक्षव्योमवत् सङ्गच्छते ॥ ७ ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

सर्वहृदयसम्बन्धात् सुखदुःखसम्भोगप्राप्तिर्ब्रह्मणोऽपि जीवस्येवेति चेन्नायं दोषः । स्वकृतकर्मफलभोक्तृत्वेनापहतपाप्मत्वेन च जीवब्रह्मणोरत्यन्तं विशेषात् ॥ ८ ॥

## अत्ता चराचरग्रहणात् ॥ ९ ॥

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इत्यत्रात्ता श्रीपुरुषोत्तमः कुतः मृत्यूपसेचनौदनस्य ब्रह्मक्षत्रोपलक्षितचराचरात्मकस्य विश्वस्य ग्रहणात् ॥ ९ ॥

## प्रकरणाच्च ॥ १० ॥

अत्ता भगवान् पुरुषोत्तमः महान्तं विभुमिति तस्यैव प्रकृतत्वाच्च ॥१०॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टावित्यत्र गुहां प्रविष्टौ आत्मानौ हि चेतनौ हि जीवपरमात्मानौ बोध्यौ कुतः तद्दर्शनात् तयोरेवास्मिन् प्रकरणे गुहाप्रवेशव्यपदेशदर्शनात् । तन्दुर्दर्शं गूढमनुप्रविष्टं गुहाहितमिति परमात्मनः या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायतेति जीवस्य ॥ ११ ॥

## विशेषणाच्च ॥ १२ ॥

जीवपरयोरेवात्र गुहाप्रविष्टत्वेन परिग्रहः । यतोऽस्मिन् प्रकरणे ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति यः सेतुरीजानानामित्यादिषु तयोरेवोपास्योपासकभावेन वेद्यत्ववेत्तृत्वादिना च विशेषितत्वाच्च ॥ १२ ॥

## अन्तर उपपत्तेः ॥ १३ ॥

य एषोऽन्तरक्षिणि पुरुषो दृश्यते इत्यक्षिण्यन्तरः पुरुषः पुरुषो-

त्तम एव नान्यः । कुतः एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति एतं संयद्वाम इत्याचक्षते इत्यात्मत्वामृतत्वाभयत्वादीनां संयद्वामत्वादीनां च पुरुषोत्तमे एवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

परमात्मनो यश्चक्षुषि तिष्ठन्नित्यादिश्रुत्या स्थानादेर्व्यपदेशाच्चाक्षिपुरुषः स एव ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अक्षिगतः पर एव कं ब्रह्म खं ब्रह्मेति सुखविशिष्टाभिधानाच्च॥१५॥

## अत एव च तद्ब्रह्म ॥ १६ ॥ (१)

तत् कं ब्रह्मेति सुखविशिष्टं ब्रह्मैव । कुतः यद्वाव कं तदेव खं यदेव खं तदेव कमिति परस्परवैशिष्ट्यप्रतिपादकवाक्यादेव च ॥१६॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतोपनिषद्येन तस्य श्रुतोपनिषत्कस्य या गतिर्देवयानाख्या अथो उत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तत इति श्रुत्यन्तरे प्रसिद्धा तस्या एवेह तेर्चिषमेवाभिसम्भवन्तीत्यादिना गतेरभिधानाच्चाक्ष्यन्तरः पुरुषः पुरुषोत्तम एव ॥ १७ ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥

अक्ष्यन्तरः परमात्मेतरो न भवति । कुतः तदितरस्य तत्र नियमेनानवस्थितेरमृतत्वाभयत्वादेस्तत्रासम्भवाच्च ॥ १८ ॥

## अन्तर्याम्यधिदेवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥ (२)

यः पृथिव्यां तिष्ठन्नित्युपक्रम्य एष त आत्मान्तर्यामीति पृथिव्या-

---

(१) इदं सूत्रं श्रीभाष्यानुसारेण, शाङ्करभाष्ये नेदं सूत्रं परिगृहीतम् परन्तु "अत एव च स ब्रह्मे"ति श्रीभाष्यगतः पाठोऽस्ति ।

(२) अन्तर्याम्यधिदैवादिष्वति शाङ्करभाष्यभामत्यादिगतः पाठः परन्त्वयं श्रीभाष्यानुसारी पाठः । तथाहि श्रीभाष्यम्—"काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदेवाधिलोकादिष्वित्युभयोरुपादान"मिति ।

ध्यधिदैवादिसर्वपर्यायेषु श्रूयमाणोन्तर्यामी । परमात्मैव । कुतः तद्धर्मस्य सर्वनियन्तृत्वादेरिह व्यपदेशात् ॥ १९ ॥

न च स्मार्तमतद्धर्माभिलापात् ॥ २० ॥

न च प्रधानमन्तर्यामिशब्दवाच्यम् चेतनधर्माणां सर्वनियन्तृत्वसर्वद्रष्टृत्वादीनां चाभिलापात् ॥ २० ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

न च जीवोऽन्तर्यामी यतश्चैनमन्तर्यामिणो भेदेन यो विज्ञाने तिष्ठन्निति काण्वाः । य आत्मनि तिष्ठन्निति माध्यन्दिनाश्चोभयेऽप्यधीयते ॥ २१ ॥

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

आथर्वणिकैरुदाहृतः अदृश्यमित्यादिना अदृश्यत्वादिगुणकः परमात्मैव । कुतः यः सर्वज्ञ इत्यादिना तद्धर्मोक्तेः ॥ २२ ॥

विशेषणभेदव्यपदेशाभ्यां नेतरौ ॥ २३ ॥(१)

प्रधानजीवौ न भूतयोन्यक्षरपदवाच्यौ विशेषणभेदव्यपदेशाभ्याम् । सर्वगतमिति विशेषणव्यपदेशः । अक्षरात् परतः पर इति भेदव्यपदेशश्च ॥ २३ ॥

रूपोपन्यासाच्च ॥ २४ ॥

अग्निर्मूर्द्धेत्यादिना परमात्मनो रूपोपन्यासाच्च नेतरौ ॥ २४ ॥

वैश्वानरः साधारणशब्दविशेषात् ॥ २५ ॥

वैश्वानरः परमात्मैव यतोऽग्निब्रह्मसाधारणस्यापि वैश्वानरशब्दस्य ब्रह्मपरिग्रहे द्युमूर्द्धत्वाद्यवयवविधानेन विशेषावगमात् ॥ २५ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

परमात्मनो हि वैश्वानरत्वे यस्याग्निरास्यं द्यौर्मूर्द्धेत्यादिस्मृत्युक्तमपि रूपं निश्चायकं स्यात् ॥ २६ ॥

---

(१) चकारघटितः "व्यपदेशाभ्यां च नेतरौ" इत्येवं श्रीभाष्ये सूत्रपाठः इत्थमेव च शाङ्करभाष्यभामत्यादिष्वपि भवति ।

शब्दादिभ्योऽन्तःप्रतिष्ठानान्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २७ ॥

जाठराग्नौ वैश्वानरशब्दस्य रूढत्वादग्नित्रेताविधानात् प्राणाहुत्याधारत्वसङ्कीर्तनादन्तःप्रतिष्ठानश्रवणाच्च वैश्वानरो न परमात्मा किन्तु जाठराग्निरिति चेन्न तथा तस्मिन् जाठरे परमेश्वरदृष्ट्युपदेशात् परमात्मपरिग्रहाभावे द्युमूर्द्धत्वाद्यसम्भवात् पुरुषत्वश्रवणाच्च वैश्वानरः परमात्मैव ॥ २७ ॥

अत एव न देवता भूतं च ॥ २८ ॥

उक्तहेतुभ्य एव देवता भूतं च न गृह्यते वैश्वानरशब्देन ॥२८॥

साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

विश्वश्चासौ नरश्च सर्वात्मा भगवान् वैश्वानर इति साक्षादुपास्य इत्यविरोधं जैमिनिराचार्यो मन्यते ॥ २९ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

उपासकानामनन्यानामनुग्रहायानन्तोपि परमात्मा तत्तदनुरूपतयाभिव्यज्यते इति प्रादेशमात्रत्वमुपपद्यते इत्येवमभिव्यक्तेरित्याश्मरथ्यो मुनिर्मन्यते ॥ ३० ॥

अनुस्मृतेर्बादरिः ॥ ३१ ॥

मूर्द्धादिपादान्तदेहकल्पनमनुस्मृतेरनुस्मरणार्थमिति बादरिराचार्यो मन्यते ॥ ३१ ॥

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३२ ॥

वैश्वानरोपासकेन क्रियमाणाया वैश्वानरविद्याङ्गभूतप्राणाहुतेरग्निहोत्रत्वसम्पत्त्यर्थं तेषामुरआदीनां वेद्यादित्वकल्पनमिति जैमिनिराचार्यो मन्यते तथैवाथ य एतदेवं विद्वानग्निहोत्रं जुहोतीत्यादिश्रुतिर्दर्शयति ॥ ३२ ॥

आमनन्ति चैनमस्मिन् ॥ ३३ ॥

एनं द्युमूर्द्धत्वादिमन्तं वैश्वानरमस्मिन्नुपासकदेहे पुरुषविधमामनन्ति च ॥ ३३ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

## प्रथमाध्याये तृतीयः पादः ।

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

यस्मिन् द्यौरिति द्युभ्वाद्यायतनं ब्रह्म स्वशब्दाद्ब्रह्मवाचकादात्मादिशब्दात् ॥ १ ॥

### मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥(१)

द्युभ्वाद्यायतनं ब्रह्मैव । कुतः तदायतनस्यैव यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीत्यादि-मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

### नानुमानमतच्छब्दात् ॥ ३ ॥

नानुमानगम्यं प्रधानं तदायतनम् तद्बोधकशब्दाभावात् ॥ ३ ॥

### प्राणभृच्च ॥ ४ ॥(२)

न प्राणभृदपि द्युभ्वाद्यायतनम् । कुतः अतच्छब्दादेव ॥ ४ ॥

### भेदव्यपदेशाच्च ॥ ५ ॥(३)

किञ्च ज्ञातृज्ञेयभावेन भेदव्यपदेशादपि द्युभ्वाद्यायतनं न प्राणभृत् ॥ ५ ॥

### प्रकरणात् ॥ ६ ॥

परमात्मप्रकरणान्न द्युभ्वाद्यायतनत्वेन जीवपरिग्रहः ॥ ६ ॥

### स्थित्यदनाभ्यां च ॥ ७ ॥

द्वा सुपर्णेत्यादिमन्त्रे परमात्मनोऽभोक्तृत्वेन स्थितेर्जीवस्यादनाच्च

---

(१) व्यपदेशाच्चेति श्रीभाष्ये सूत्रपाठः । चकाररहितस्तु शाङ्करभाष्यभामत्योः पाठः । चकारयुक्त एव तु पाठो युक्तः, हेत्वन्तरोपन्यासात् ।

(२) श्रीभाष्ये त्वेकहेतुकत्वात् प्राणभृच्चेति तृतीयसूत्रशेषतयैव पठितम् । अन्यैस्तु भिन्नतया, तथैवेहापि ।

(३) चकाररहित एव श्रीभाष्ये पाठस्तथैव शाङ्करभाष्येपि, उत्तरसूत्रवचकारस्य तृतीयसूत्रगतस्यैव समुच्चायकत्वात् ।

न जीवात्मा द्युभ्वाद्यायतनम् ॥ ७ ॥

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

परमाचार्यैः श्रीकुमारैरस्मद्गुरवे श्रीमन्नारदायोपदिष्टोभूमा त्वेव विजिज्ञासितव्य इत्यत्र भूमा प्राणो न भवति किन्तु श्रीपुरुषोत्तमः । कुतः प्राणादुपरि भूम्न उपदेशात् ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥

निरतिशयसुखरूपत्वाऽमृतत्वस्वमहिमप्रतिष्ठितत्वादीनां परमात्मन्येवोपपत्तेश्च भूमा परमात्मैव ॥ ९ ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥

अक्षरं ब्रह्म । कुतः कालत्रयवर्तिकार्याधारतया निर्दिष्टस्याकाशस्य धारणात् ॥ १० ॥

सा च प्रशासनात् ॥ ११ ॥

सा च धृतिः पुरुषोत्तमस्यैव । कुतः एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्याज्ञापयितृत्वश्रवणात् ॥११॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अत्र प्रधानस्य जीवस्य वाऽक्षरशब्देन ग्रहणं नास्ति परमात्मैवाक्षरशब्दार्थः । कुतः तद्वा एतदक्षरं गार्ग्य ऽदृष्टं द्रष्टृ ऽश्रुतं श्रोतृ ऽमतं मन्तृ ऽविज्ञातं विज्ञातृ इत्यन्यभावव्यावृत्तेः ॥ १२ ॥

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

पुरिशयं पुरुषमीक्षते इतीक्षतिकर्म ब्रह्माण्डान्तर्गतो ब्रह्मलोकस्थो ब्रह्मा न भवति किन्तु स एव प्रकृतः स्वासाधारणाप्राकृतब्रह्मलोकशयः परमात्मेक्षतिकर्म । कुतः यत् तच्छान्तमजरमभयमित्यादिना तद्धर्माणां व्यपदेशात् ॥ १३ ॥

दहर उत्तरेभ्यः ॥ १४ ॥

अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरेऽस्मिन्नन्तराकाश इति

श्रुतिप्रोक्तो दहराकाशः परमात्मा भवितुमर्हति। कुतः उत्तरेभ्यो यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः। उभे अस्मिन् द्यावापृथिवीअन्तरेव समाहिते एष आत्माऽपहतपाप्मा विजर इत्यादिभिर्वक्ष्यमाणा ये परमात्मासाधारणधर्मास्तेभ्यो हेतुभूतेभ्यः ॥ १४ ॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

सर्वाः प्रजा अहरहर्गच्छन्त्य इति गतिर्ब्रह्मलोकमिति शब्दस्ताभ्यां दहरः पर इति निश्चीयते सता सोम्य तदा सम्पन्नो भवतीति प्रत्यहं गमनं श्रुत्यन्तरे तथैव दृष्टम्, कर्मधारयसमासपरिग्रहे ब्रह्मैव लोक इति लिङ्गशब्दसामर्थ्यं च ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

स सेतुर्विधृतिरेषां लोकानामिति सर्वलोकविधारकत्वं दहरस्य परमात्मत्वे सङ्गच्छते अस्य च महिम्नो धृत्याख्यस्याऽस्मिन् परमात्मन्येव एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रुत्यन्तरे उपलब्धेः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

आकाशो ह वै नामरूपयोर्निर्वहिता सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति परमात्मन्यप्याकाशशब्दप्रसिद्धेश्च दहराकाशः परमात्मैव ॥ १७ ॥

## इतरपरामर्शात् स इति चेन्न असम्भवात् ॥ १८ ॥

एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचेति दहरवाक्यमध्ये जीवस्यापि परामर्शात् जीवोऽस्तु दहर इति चेन्न अपहतपाप्मत्वादीनां पूर्वोक्तानां जीवे ऽसम्भवात् ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तराज्जीवपरात् प्रजापतिवाक्याज्जीवेऽप्यपहतपाप्मत्वादिगुणाष्टकमवगम्यते अतः स एव दहराकाशोऽस्त्विति चेदुच्यते। पूर्वो-

कगुणयुक्तो नित्याविर्भूतस्वरूपः परमात्मा दहर आविर्भूतस्वरूपो जीवस्तु न ॥ १९ ॥

अन्यार्थश्च परामर्शः ॥ २० ॥

जीवपरामर्शः परमात्मनो जीवस्वरूपाविर्भावहेतुत्वप्रदर्शनार्थः॥२०॥

अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २१ ॥

अल्पश्रुतेर्न विभुरत्र ग्राह्य इति चेत् तत्समाधानाय यद्वक्तव्यं तदुक्तं पुरस्तात् ॥ २१ ॥

अनुकृतेस्तस्य च ॥ २२ ॥

तस्य नित्याविर्भूतस्वरूपस्य तमेव भान्तमनुभाति सर्वमित्यनुकृतेश्चानुकर्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति ॥ २२ ॥

अपि स्मर्यते ॥ २३ ॥(१)

अपि च मम साधर्म्यमागता इति स्मर्यते ॥ २३ ॥

शब्दादेव प्रमितः ॥ २४ ॥

प्रमितोऽङ्गुष्ठपरिमाणकः पुरुषोत्तम एव ईशानो भूतभव्यस्येति शब्दात् ॥ २४ ॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

उपासकहृदि तदपेक्षयाङ्गुष्ठमात्रत्वमुपपद्यते । ननु जन्तुशरीरेषु हृदयस्यानियतपरिमाणत्वात् तदपेक्षयापि तथात्वं कथमत्राह । मनुष्याधिकारत्वात् ॥ २५ ॥

तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

तस्मिन् ब्रह्मोपासने मनुष्याणामुपरिष्टादपि ये देवादयो हि तेषामप्यधिकारोऽस्तीति भगवान् बादरायणो मन्यते ॥ २६ ॥

---

(१) अपि स्मर्यत इति श्रीभाष्ये सूत्रपाठः, अपि च स्मर्यत इति शाङ्करभाष्यभामत्योः । अपि च, एतदन्तं दहराधिकरणं श्रीभाष्यानुसारितयैवेह स्थापितम् । शाङ्करभाष्यभामत्योस्त्वधिकरणान्तरपरतया सूत्रद्वयं धृतम्, तत्तु श्रीभाष्ये निराकृतमेव ।

विरोधः कर्मणीति चेन्न अनेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

शरीरं विना ब्रह्मोपासनानुपपत्त्या तेषामवश्यं विग्रहवत्त्वमभ्युपगन्तव्यम् । तथात्वे तु कर्मणि विरोध इति चेन्नायं दोषः । कुतः एकस्याप्यनेकेषां देहानां युगपत्प्रतिपत्तिदर्शनात् ॥ २७ ॥

शब्द इति चेन्न अतःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

देवादीनां विग्रहवत्त्वस्वीकारे तद्वाचिनि वैदिके शब्दे विरोधः स्यात् । अर्थोत्पत्तेः प्राग्विनाशानन्तरं च निरर्थकत्वापत्तेरिति चेन्नायं विरोधः । अतः शब्दादेव नित्याकृतिवाचकात् प्रजापतिबुद्ध्युद्बोधकादर्थस्य प्रभवात् । वेदेन नामरूपे व्याकरोत् ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥

इत्यादिश्रुतिस्मृतिभ्याम् ॥ २८ ॥

अत एव नित्यत्वम् ॥ २९ ॥(१)

प्रजापतेः सृष्टिः शब्दपूर्विका अतो हेतोर्वेदस्य नित्यत्वम् ॥ २९ ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

एवं प्राकृतसृष्टिसंहारात्मिकायामावृत्तावपि न विरोधः । कुतः कल्पादौ सृज्यमानस्य पदार्थस्य कल्पान्तरातीतेन पदार्थेन तुल्यनामरूपादिमत्त्वात् सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति दर्शनात् ।

यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥

इति स्मृतेः ॥ ३० ॥

मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

उपास्यस्योपासकत्वासम्भवान्मध्वादिविद्यासु सूर्यादीनामनधिकार इति जैमिनिर्मन्यते ॥ ३१ ॥

---

(१) अत एव च नित्यत्वमिति चकारघटितः शाङ्करभाष्यभामत्यादिपाठः ।

ज्योतिषि भावाच्च ॥ ३२ ॥

ब्रह्मणि तेषामुपासकत्वेन भावाच्च मध्वादिष्वनाधिकार इति पूर्वः पक्षः ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तत्र सिद्धान्तमाह । मध्वादिष्वपि सूर्यवस्वादीनामधिकारसद्भावं बादरायणो मन्यते, हि यतस्तेषां स्वान्तर्यामिब्रह्मोपासनेन कल्पान्तरेऽपि स्वाधिकारप्राप्तिपूर्वकब्रह्मलिप्सासम्भवोऽस्ति ॥ ३३ ॥

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

छान्दोग्ये मुमुक्षौ गुरुप्रयुक्तं शूद्रपदमालोच्य शूद्रोऽपि ब्रह्मविद्यायामधिक्रियते इति नाशङ्कनीयम् । अस्य मुमुक्षोर्जानश्रुतेर्हंसप्रयुक्तानादरवाक्यश्रवणात् तदैव गुरुं प्रत्याद्रवणात् शुक् सञ्जाता इति शूद्रेति सम्बोधनेन सूच्यते ॥ ३४ ॥

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

अथ हं शौनकञ्च कापयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे इत्युत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण सह समभिव्याहाररूपलिङ्गाज्जानश्रुतेः क्षत्रियत्वस्य गतेरवगतेर्न जानश्रुतिः शूद्रः ॥ ३५ ॥

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

विद्याप्रदेशे तं होपनिन्ये इत्यादिनोपनयनसंस्कारपरामर्शाच्छूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हतीति तदभावाभिलापाच्च विद्यायां शूद्रो नाधिक्रियते ॥ ३६ ॥

तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ ॥

किञ्च गौतमस्य जाबाले शूद्रत्वाभावनिर्णये सति तमुपनेतुमनुशासितुं प्रवृत्तेः शूद्रस्यानाधिकार एवात्र ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रो नाधिक्रियते शूद्रसमीपे नाध्येतव्यमित्यादिना तस्य वेदश्रवणादिप्रतिषेधात् ॥ ३८ ॥

स्मृतेश्च ॥ ३९ ॥

न चास्योपदिशेद्धर्ममित्यादिस्मृतेश्च ॥ ३९ ॥

कम्पनात् ॥ ४० ॥

प्रमितः परः पुरुषः प्रतिपत्तव्यः सर्वजगत्कम्पकत्वान्महत्त्वादिभ्यश्च ॥ ४० ॥

ज्योतिर्दर्शनात् ॥ ४१ ॥

तस्य भासेति ज्योतिर्दर्शनात् प्रमितः पुरुषः परः ॥ ४१ ॥

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

आकाशो ह वै नामरूपयोर्निर्वहितेत्यत्राकाशशब्दवाच्यः पुरुषोत्तमः । कुतः । मुक्तात्मनो जीवात् परमात्मनो नामरूपोपलक्षितनिखिलनामरूपवद्वस्तुनिर्वोढृतयार्थान्तरत्वेन व्यपदेशाद्ब्रह्मत्वामृतत्वादिव्यपदेशाच्च ॥ ४२ ॥

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

अज्ञात् सर्वज्ञस्य सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशाच्च ॥ ४३ ॥

पत्यादिशब्देभ्यः ॥ ४४ ॥

सर्वस्याधिपतिः सर्वस्येशान इत्यादिशब्देभ्यो जीवाद्भेदेन परमात्मनो व्यपदेशात् स एवाकाश इति स्थितम् ॥ ४४ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकवाक्यार्थे वेदान्तपारिजातसौरभे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## प्रथमाध्याये चतुर्थः पादः ।

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्य-स्तगृहीतेर्दर्शयति च ॥ १ ॥

ननु महतः परमव्यक्तमव्यक्तात् पुरुषः पर इत्यत्र कठशाखायामानुमानिकं प्रधानमपि शब्दवदुपलभ्यते इति चेन्न आत्मानं रथिनं विद्धि शरीरं रथमेवेत्यत्र शरीरस्य रथरूपकविन्यस्तस्याव्यक्तशब्देन ग्रहणात् । इन्द्रियादीनां वशीकरणप्रकारं प्रतिपादयन् रूपकपरिकल्पितग्रहणमेव दर्शयति च वाक्यशेषः—

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि ॥ इति ॥ १ ॥

### सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

अव्यक्तशब्दः सूक्ष्मवचनश्चेत् तदर्थभूतं शरीरमपि सूक्ष्ममेव सूक्ष्मस्यैव स्थूलावस्थापन्नत्वात् ॥ २ ॥

### तदधीनत्वादर्थवत् ॥ ३ ॥

औपनिषदं प्रधानं परमकारणाधीनत्वादर्थवत् स्वानर्थक्यं पराभिमतस्य तस्येति भेदः ॥ ३ ॥

### ज्ञेयत्वावचनाच्च ॥ ४ ॥

नाव्यक्तशब्दस्तान्त्रिकप्रधानवचनः ज्ञेयत्वावचनाच्च ॥ ४ ॥

### वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते इति श्रुतिः प्रधानस्य ज्ञेयत्वं वदतीति चेन्न ज्ञेयत्वेन प्राज्ञः परमात्मा निर्दिष्टस्तत्प्रकरणात् ॥ ५ ॥

### त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अस्यामुपनिषद्युपायोपेयोपगन्तॄणामुपन्यासः प्रश्नश्च पूर्वाप-

स्वाक्यार्थविचारेण लभ्यते । आनुमानिकतत्त्वनिरूपणस्यात्रावकाशो नास्ति ॥ ६ ॥

महद्वच्च ॥ ७ ॥

सांख्यैर्महच्छब्दो बुद्ध्याख्ये द्वितीये तत्त्वे प्रयुक्तोऽपि ततोऽन्यत्रापि वेदाहमेतं पुरुषं महान्तमित्यादिवेदवचनेन यथा दृश्यते तथाऽव्यक्तशब्दोपि शरीरपरोऽस्तु ॥ ७ ॥

चमसवदविशेषात् ॥ ८ ॥

अजामेकामित्यादिमन्त्रोक्ता प्रकृतिः स्मृतिसिद्धा भवतु इति पूर्वपक्षे राद्धान्तं दर्शयति मन्त्रोक्ताऽजा ब्रह्मात्मिकाऽस्तु पूर्वपक्षनिर्धारणे विशेषाभावात् । अर्वाग्बिलश्चमस इतिमन्त्रोक्तचमसवत् ॥ ८ ॥

ज्योतिरुपक्रमा तु तथाह्यधीयत एके ॥ ९ ॥

ननु चमसमन्त्रे इदं तच्छिर इति वाक्यशेषाच्छिरश्चमस इति गम्यते । अजामन्त्रे किं गमकं विशेषार्थग्रहणे इत्यत्रोच्यते । ज्योतिर्ब्रह्मलक्षणमुपक्रमः कारणं यस्याः साप्यजामन्त्रेणोच्यते यतस्तथैव तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते इत्येके ऽधीयते ॥ ९ ॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

ब्रह्मोपादानकत्वाजात्वयोरेकस्मिन् धर्मिणि न विरोधः । सूक्ष्मशक्तिमतो जगत्कारणाद्ब्रह्मणो विश्वसृष्ट्युपदेशाद् द्वयं सङ्गच्छते मध्वादिवत् ॥ १० ॥

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च(?) ॥ ११ ॥

न च यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित इति संख्योपसंग्रहादपि प्रधानादीनां पञ्चविंशतिपदार्थानां श्रुतिमूलकत्वमस्ति प्रधानस्यैकस्य श्रुतिवेद्यत्वे को विवाद इति वक्तव्यम् । कुतः । नानाभावात् । यस्मिन्निति श्रुतिसिद्धे ब्रह्मणि प्रतिष्ठितानां पदार्थानां ब्रह्मात्मकत्वप्रतीत्या तान्निकेभ्यः पृथक्त्वात् आधारस्य ब्रह्मणो हि तथाकाशस्य चातिरेकत्वाच्च[1] ॥ ११ ॥

---

(१) अतिरिक्तत्वाच्चेति वा अतिरेकाच्चेति वा पाठो युक्तः स्यात् ।

प्राणादयो वाक्यशेषात् ॥ १२ ॥

प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरिति वाक्यशेषात् ते पञ्चजना प्राणादयो बोध्याः ॥ १२ ॥

ज्योतिषैकेषामसत्यऽन्ने ॥ १३ ॥

काण्वानां वाक्यशेषे त्वसत्यऽन्ने उपक्रमगतेन ज्योतिषा पञ्चत्वं पूरणीयम् ॥ १३ ॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वत्राकाशादिसृष्टिविषयकवाक्येषु ग्राह्यम् लक्षणसूत्रादिषु यत्प्रकारकं ब्रह्म व्यपदिष्टं तत्प्रकारकस्यैवाकाशादिकारणत्वेन प्रतिपादितत्वात् ॥ १४ ॥

समाकर्षात् ॥ १५ ॥

सोकामयतेति प्रकृतस्य सत एव ब्रह्मणः असद्वा इदमित्यत्र समाकर्षात आदित्यो ब्रह्मेति प्रकृतस्य ब्रह्मणोऽसदेवेदमित्यत्र समाकर्षात् असच्छब्देन सृष्टेः पूर्वं नामरूपाऽविभागात् तत्सम्बन्धितयाऽस्तित्वाभावेन सद्रूपं ब्रह्मैवाभिधीयते । तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत इत्यव्याकृतशब्दोदितस्योत्तरवाक्ये स एष इह प्रविष्ट आ नखाग्रेभ्य इत्यादौ समाकर्षात् अचेतनस्य प्रधानस्यान्तःप्रविश्य प्रशासितृत्वाद्यसम्भवात् तदन्तरात्मभूतमव्याकृतं ब्रह्मेत्युच्यते । जगत्कारणप्रतिपादकेषु वाक्येषु लक्षणसूत्रादिना निर्णीतं ब्रह्मैव ग्राह्यं न प्रधानशङ्कागन्धोऽपीति भावः ॥ १५ ॥

जगद्वाचित्वात् ॥ १६ ॥

यो वै बालाके एतेषां पुरुषाणां कर्ता यस्यैतत् कर्मेति वाक्ये धर्माधर्मकर्मफलभोक्ता तन्त्रोक्तः पुरुषो वेदितव्य इति न शङ्क्यम् परमात्मैव तत्र वेदितव्यत्वेन निर्दिष्टः । कुतः । ब्रह्म ते ब्रवाणीति ब्रह्मप्रकरणात् क्रियते यत् तत् कर्मेति कर्मशब्दस्य जगद्वाचित्वात् एतदित्यनेन सर्वनाम्ना प्रत्यक्षादिप्रमाणसिद्धस्य जगत उपस्थितत्वाच्च तन्त्रोक्तपुरुषप्रकरणाभावाच्च ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १७ ॥

एष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते इति जीवलिङ्गात् अथास्मिन् प्राण एवैकधा भवतीति मुख्यप्राणलिङ्गाच्च तदन्यतरो ग्राह्यो न ब्रह्मेति चेत् तद्व्याख्यातम् प्रतर्दनाधिकारे जीवादिलिङ्गानि तत्र ब्रह्मपरत्वेन व्याख्यातानि तद्वदिहापि ज्ञेयानीत्यर्थः ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

अस्मिन् प्रकरणे जीवग्रहणमन्यार्थं जीवव्यतिरिक्तब्रह्मबोधार्थमिति जैमिनिर्मन्यते क्वैष एतद् बालाके पुरुषोऽशयिष्ट क्व च एतदभूत् कुत एतदागादिति प्रश्नात् । यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवतीत्यादिप्रतिवचनात् । वाजसनेयिनोऽपि एवमेव जीवव्यतिरिक्तं परमात्मानमामनन्ति । तत्रापि प्रश्नप्रतिवचने भवतः क्वैष तदाभूत् कुत एतदागादिति प्रश्नः य एषोऽन्तर्हृदय आकाशस्तस्मिञ् शेते इति प्रतिवचनम् ॥ १८ ॥

वाक्यान्वयात् ॥ १९ ॥

आत्मा वा अरे द्रष्टव्य इत्यादिना परमात्मा द्रष्टव्यत्वेन ग्राह्यः वाक्यस्योपक्रमादिपर्यालोचनया तत्रैवान्वयात् ॥ १९ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

कथं तर्हि जीवेनोपक्रमणमत्रोच्यते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेर्यज्जीवस्य परमात्मकार्यतया परमात्मानन्यत्वात् तद्वाचकशब्देन परमात्माभिधानं गमकमित्याश्मरथ्यो मन्यते ॥ २० ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

शरीरादुत्क्रमिष्यतो जीवस्य ब्रह्मणा सहभावात् तच्छब्देन ब्रह्माभिधीयते इत्यौडुलोमिर्मन्यते स्म ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

जीवात्मनि स्वनियम्ये अन्तः प्रविष्टः शास्ता जनानामित्यादौ प्र-

सिद्धस्य परमात्मनो नियन्तृत्वेनावस्थितेर्हेतोर्नियम्यपदेनोपक्रमादौ(?) नियन्तृपरिग्रह इति काशकृत्स्नो मन्यते स्म ॥ २२ ॥

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

प्रकृतिरुपादानकारणं चकारान्निमित्तकारणं च परमात्मैव उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवतीति प्रतिज्ञायाः यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादिति दृष्टान्तस्य च सामञ्जस्यात् ॥ २३ ॥

अभिध्योपदेशाच्च ॥ २४ ॥

तदैक्षत बहु स्यामित्यभिध्योपदेशाद् ब्रह्मणः सृष्टृत्वप्रकृतित्वे वर्तेते ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति निमित्तत्वमुपादानत्वं(१) च ब्रह्मण आम्नानाद् ब्रह्मैवोभयरूपम् ॥ २५ ॥

आत्मकृतेः परिणामात् ॥ २६ ॥

ब्रह्मैव निमित्तमुपादानं च । कुतः । तदात्मानं स्वयमकुरुतेत्यात्मकृतेः । ननु कर्तुः कुतः कृतिविषयत्वम् । परिणामात्, सर्वज्ञं सर्वशक्ति ब्रह्म स्वशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणमय्याव्याकृतेन स्वरूपेण शक्तिमता कृतिमता परिणतमेव भवति ॥ २६ ॥

योनिश्च हि गीयते ॥ २७ ॥

यद्भूतयोनिं परिपश्यन्ति धीराः कर्तारमीशं पुरुषं ब्रह्मयोनिमिति चेति योनिशब्देन ब्रह्म गीयते । अतो ब्रह्मैवोपादानम् ॥ २७ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

एतेनाधिकरणसमुदायेन सर्वे वेदान्ता ब्रह्मपरत्वेन व्याख्याता व्याख्याताः ॥ २८ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्च प्रथमाध्यायः ॥

---

(१) निमित्तत्वस्योपादानत्वस्येति षष्ठ्यन्तपाठो युक्तः स्यात् ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनव-
काशदोषप्रसङ्गात् ॥ १ ॥

उक्तसमन्वयस्याविरोधप्रकारः प्रतिपाद्यते । ननु श्रुत्युपबृंहणाय स्मृत्यपेक्षा वर्तते तत्र सांख्यस्मृतिर्ग्राह्या । न चाचेतनकारणवादिनी सा तु न ग्राह्येति वाच्यम् । स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्न अन्यस्मृतीनां वेदोक्तचेतनकारणविषयाणां बाधप्रसङ्गादिति वाक्यार्थः॥१॥

इतरेषां चानुपलब्धेः ॥ २ ॥

इतरेषां मन्वादीनां वेदस्य प्रधानपरत्वानुपलब्धेश्च वेदविरुद्धस्मृतेरप्रामाण्यम् ॥ २ ॥

एतेन योगः प्रत्युक्तः ॥ ३ ॥

सांख्यस्मृतिनिरासेन योगस्मृतिः प्रत्याख्यातास्ति ॥ ३ ॥

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

तर्कबलेन प्रत्यवतिष्ठते—जगतो न चेतनप्रकृतिकत्वम्, विलक्षणत्वात् । विलक्षणत्वं च विज्ञानं चाविज्ञानं चाभवदित्यादिशब्दादस्यावगन्तव्यम् ॥ ४ ॥

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

पृथिव्यऽब्रवीत् ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुरित्यादौ तु तत्तदभिमानिनीनां देवतानां व्यपदेशो हन्ताहमिमास्तिस्रो देवता इति विशेषणात् अग्निर्वाग्भूत्वा मुखं प्राविशदित्याद्यनुगतेश्च॥५॥

दृश्यते तु ॥ ६ ॥

तत्रोच्यते पुरुषाद्विलक्षणस्य केशादेर्गोमयाद्विलक्षणस्य वृश्चिकस्योत्पत्तिर्दृश्यते । अतो ब्रह्मविलक्षणत्वाज्जगतो न तत्प्रकृतिकत्वमिति न वक्तव्यम् ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

ननूपादानादुपादेयस्य विलक्षणत्वे उत्पत्तेः पूर्वं तदसद्भवितुमर्हति । नैष दोषः पूर्वसूत्रे प्रकृतिविकारयोः सर्वथा सादृश्यानियमस्य प्रतिषेधमात्रत्वात् ॥ ७ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

आक्षेपः । प्रलयसमये कार्यवत् कारणस्याप्यचेतनत्वादिप्राप्तिप्रसङ्गाज्जगदुपादानं ब्रह्मेत्यसमञ्जसम् ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

समाधानम् । तद्वत्प्रसङ्गो नैवास्ति । यथा पृथिवीविकारस्तस्यां विलीयमानस्तां न दूषयति तथा ब्रह्मविकारः संसारः ॥ ९ ॥

स्वपक्षे दोषाच्च ॥ १० ॥

वेदविरुद्धवादी सांख्यो वक्तुमक्षमस्तत्पक्षे ऽप्युक्तदोषयोगात् ॥ १० ॥

तर्काप्रतिष्ठनादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

तर्कानवस्थानाच्चोक्तसिद्धान्तस्य नासामञ्जस्यम् । दृढतर्केण वेदविरुद्धे प्रधानादिके जगत्कारणे ऽनुमिते तु तादृशेन तर्केण तत्प्रतिपक्षसम्भवात् । एवमेव तार्किकविप्रतिपत्त्याऽनिर्मोक्षप्रसङ्गाद्वेदोक्तस्यैवोपादेयत्वमिति सिद्धम् ॥ ११ ॥

एतेन शिष्टाऽपरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एतेन सांख्यपक्षनिरासेन परिशिष्टा वेदविरुद्धकारणवादिनोऽन्येपि प्रत्युक्ताः ॥ १२ ॥

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

ब्रह्मणो जगदुपादानत्वे जीवरूपेण ब्रह्मण एव सुखदुःखभोक्तृत्वापत्तेर्वेदप्रसिद्धो भोक्तृनियन्तृविभागो न स्यादिति चेदविभागेऽपि समुद्रतरङ्गयोरिव सूर्यतत्प्रभयोरिव तयोर्विभागः स्यात् ॥ १३ ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

कार्यस्य कारणानन्यत्वमस्ति न त्वत्यन्तभिन्नत्वम् । कुतः । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ऐतदात्म्यमिदं सर्वं तत्सत्यं तत्त्वमसि सर्वं खल्विदं ब्रह्मेत्यादिभ्यः ॥ १४ ॥

भावे चोपलब्धेः ॥ १५ ॥

तदनन्यत्वं कारणसद्भावे कार्योपलब्धेः ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥

ब्रह्म वा इदमग्र आसीदिति सामानाधिकरण्यनिर्देशेनावरकालीनस्य कार्यस्य कारणे सत्त्वात् तदनन्यत्वम् ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ १७ ॥

असद्वा इदमग्र आसीदित्यसद्व्यपदेशात् कार्यस्य सृष्टेः प्राङ् न सत्त्वमिति चेन्न सूक्ष्मत्वेन तादृग्व्यपदेशोऽस्ति । कुतोऽवगम्यते । तत् सदासीदिति वाक्यशेषात् । यद्यसदेव कार्यमुत्पद्यते तर्हि वह्नेर्यवाद्यङ्कुरोत्पत्तिः कुतो नास्तीति युक्तेः सदेव सोम्येदमग्र आसीदिति शब्दान्तराच्च ॥ १७ ॥

पटवच्च ॥ १८ ॥

यथा च पूर्वसंवेष्टितः पश्चात्प्रसारितः पटस्तद्वद्भिन्नत्वम् ॥ १८ ॥

यथा च प्राणादिः ॥ १९ ॥

यथा च प्राणापानादिर्वायुः प्राणायामादिना निरुद्धः स्वरूपेणावतिष्ठते निगमनिरोधश्चाऽसत्ता तत्तद्रूपेण गृह्यते तथेदमपि ॥ १९ ॥

इतरव्यपदेशाद्धिताऽकरणादिदोषप्रसक्तिः ॥ २० ॥

आक्षेपः । ब्रह्मकारणवादे ऽयमात्मा ब्रह्मेति जीवस्य ब्रह्मत्वनिरूपणात् सर्वक्लेशालयजगज्जननेनात्मनो ऽहिताकरणादिदोषप्रसक्तिः ॥ २० ॥

## अधिकं तु भेदनिर्देशात् ॥ २१ ॥

तत्परिहारः । सुखदुःखभोक्तुः शारीरादधिकमुत्कृष्टं ब्रह्म जगत्कर्तृ ब्रूमः । आत्मानमन्तरो यमयतीति भेदव्यपदेशात् न तयोरत्यन्ताभेदोऽस्ति यतो हिताऽकरणादिदोषप्रसक्तिः स्यात् ॥ २१ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २२ ॥

भूविकाररूपवज्रवैदूर्यादिवद्ब्रह्माभिन्नोऽपि क्षेत्रज्ञः स्वस्वरूपतो भिन्न एवातः परोक्तस्यानुपपत्तिः ॥ २२ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २३ ॥

कुम्भकारादीनामनेकोपकरणोपसंहारदर्शनाद् बाह्योपकरणरहितं ब्रह्म न जगत्कारणमिति चेन्न यतः क्षीरवत् कार्याकारेण ब्रह्म परिणमते स्वास्साधारणशक्तिमत्त्वात् ॥ २३ ॥

## देवादिवदपि लोके ॥ २४ ॥

यथा देवादयः सङ्कल्पमात्रेण स्वापेक्षितं सृजन्ति तथा भगवानपि ॥ २४ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २५ ॥

आक्षिपति । ब्रह्मणो जगत्प्रकृतित्वे तन्निरवयवत्वाङ्गीकारे कृत्स्नप्रसक्तिः । सावयवत्वे निरवयवत्ववादि शास्त्रं विरुध्येत ॥ २५ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २६ ॥

समाधत्ते । नोक्तदोषोऽस्ति सोऽकामयत बहुस्यां स्वयमात्मानमकुरुत सच्चत्यच्चाभवदेतावानस्य महिमा ततो ज्यायांश्च पुरुषः यथोर्णनाभिः सृजते तथा पुरुषाद्भवति विश्वमित्यस्यार्थस्य शब्दमूलत्वादन्यन्निर्मूलम् ॥ २६ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २७ ॥

देवादिशरीरे क्षेत्रज्ञे यदा नाना विकृतयः सङ्गताः सन्ति तदा सर्वशक्तौ सर्वेश्वरे जगत्कारणे कानुपपत्तिः ॥ २७ ॥

स्वपक्षे दोषाच्च ॥ २८ ॥

अस्मत्पक्षस्तिष्ठतु, स्वपक्षे ऽपि भवदुक्तदोषापातान्मूकीभावो युक्तः ॥ २८ ॥

सर्वोपेता सा तद्दर्शनात् ॥ २९ ॥

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतेः सा देवता सर्वशक्त्युपेता सर्वं कर्तुं समर्था भवति ॥ २९ ॥

विकरणत्वान्नेति चेत् तदुक्तम् ॥ ३० ॥

न तस्य कार्यं करणं च विद्यत इति करणनिषेधात् सर्वशक्त्युपेतस्यापि जगत्कर्तृत्वं न सङ्गच्छत इति चेदत्र वक्तव्यमुत्तरं यत् तत्पूर्वत्रोक्तमेव ॥ ३० ॥

न प्रयोजनवत्त्वात् ॥ ३१ ॥

ननु नित्यावाप्तसमस्तकामः परः कर्ता न । कुतः । कर्तुः प्रवृत्तेः प्रयोजनवत्त्वादिति ॥ ३१ ॥

लोकवत्तु लीलाकैवल्यम् ॥ ३२ ॥

तत्रोच्यते । परस्यैतद्रचनादिलोकप्रसिद्धनृपत्यादिक्रीडामात्रमिव युज्यते ॥ ३२ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति ॥ ३३ ॥

विषमसृष्टिसंहारादिनिमित्ते वैषम्यनैर्घृण्ये जीवकर्मसापेक्षत्वात् पर्जन्यस्येव जगज्जन्मादिकर्तुर्न स्याताम, तथैव दर्शयति पुण्यो वै पुण्येन कर्मणा पापः पापेनेति श्रुतिः ॥ ३३ ॥

न कर्माऽविभागादिति चेन्नाऽनादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३४ ॥

ननु सदेव सोम्येदमग्र आसीदेकमिति सृष्टेः प्रागविभागश्रवणात् कर्मसापेक्षत्वं परस्य न सङ्गच्छत इति चेन्न कर्मणां पूर्वसृष्टिस्थजीवकृतानामनादित्वात् तदानीमपि सत्त्वात् । पूर्वसृष्टेरपि अकस्मा-

दुत्तरसृष्ट्यनुपपत्त्योपपद्यते च सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादावुपलभ्यते चापि ॥ ३४ ॥

सर्वधर्मोपपत्तेश्च ॥ ३५ ॥

सर्वेषां कारणधर्माणां ब्रह्मण्येवोपपत्तेश्चाविरोधसिद्धिः ॥ ३५ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे द्वितीयाध्यायस्य प्रथमः पादः ॥



द्वितीये ऽध्याये द्वितीयः पादः ।

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

प्रधानमनुमानगम्यं न जगत्कारणम् । कुतः । स्रज्यरचनानभिज्ञत्वात् ततो विविधरचनानुपपत्तेश्च ॥ १ ॥

## प्रवृत्तेश्च ॥ २ ॥

स्वतः प्रवृत्त्यनुपपत्तेश्च नानुमानम् ॥ २ ॥

## पयोम्बुवच्चेत् तत्रापि ॥ ३ ॥

ननु क्षीरादिवत्स्वयं प्रधानं जगज्जन्मादौ प्रवर्तते इति चेत् तत्रापि परः प्रेरको योऽप्सु तिष्ठन्नित्यादिना श्रूयते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

प्राज्ञानधिष्ठितं प्रधानं न जगत्कारणम् । कुतः । तद्व्यतिरिक्तस्य सहकार्यन्तरस्यानवस्थितेर्यतस्तव तदनपेक्षत्वात् ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

अनडुहाद्यु(१)पभुक्ते तृणादौ क्षीराकारेण परिणामाभावाद्धेन्वाद्युपभुक्तं तृणादि यथा स्वतः क्षीरीभवति तथाऽव्यक्तमपि महदाद्याकारेण परिणमते इति न वक्तव्यम् ॥ ५ ॥

## अभ्युपगमे ऽप्यर्थाभावात् ॥ ६ ॥

कथञ्चित्प्रवृत्त्यभ्युपगमे ऽपि प्रधानं कारणं न भवति तस्याचेतनत्वेन प्रवृत्तिप्रयोजनासम्भवात् ॥ ६ ॥

## पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

यथा पङ्गुरऽन्धमऽश्माऽयः प्रवर्तयति तथा पुरुषः प्रधानमिति चेत् तथात्वे निष्क्रियत्वाभ्युपगमविरोधः प्रधानस्य परप्रेर्यत्वेन जगत्कारणत्वे ऽप्राधान्यप्रसङ्गः ॥ ७ ॥

---

(१) अनडुदादिति युक्तः स्यात् ।

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

प्रलयवेलायां साम्येनावस्थितानां गुणानां परस्पराङ्गाङ्गिभावासम्भवाच्च नानुमानं जगत्कारणम् ॥ ८ ॥

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

प्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगान्न तत्कर्तृकं जगत् ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

असमञ्जसं कापिलं मतं वेदान्तविरुद्धत्वात् पूर्वापरविरुद्धत्वाच्च ॥ १० ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

सावयवत्वे ऽनवस्थाप्रसङ्गान्निरवयवत्वे परिमाणान्तरोत्पादकत्वासम्भवात् परमाणुभ्यां द्व्यणुकोत्पत्तेरसामञ्जस्यं तेभ्यस्त्र्यणुकोत्पत्तेश्च सुतरामसामञ्जस्यम् । तद्वत्परमाणुकारणवाद्यभ्युपगतं सर्वमसमञ्जसं भवति ॥ ११ ॥

उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

अदृष्टस्य परमाणुवृत्तित्वाऽसम्भवादात्मसम्बन्धिनस्तस्य परमाणुगतकर्मप्रेरकत्वासम्भवाच्चेत्येवमुभयथाप्याद्यं कर्म परमाणुगतं न सम्भवत्यतः कर्मनिबन्धनसंयोगपूर्वकद्व्यणुकादिक्रमेण जगदुद्भवस्याभावः ॥ १२ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

समवायाभ्युपगमाच्च परमाणुकारणपक्षासम्भवः । यथा द्व्यणुकं समवायसम्बन्धेन स्वकारणे समवैत्यत्यन्तभिन्नत्वात् तथा समवायोऽपि समवायिभ्यां समवायसम्बन्धान्तरेण सम्बध्येत अत्यन्तभेदसाम्यात्, सोऽपि सम्बन्धान्तरेणेत्यनवस्थानात् ॥ १३ ॥

नित्यमेव च भावात् ॥ १४ ॥

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेर्भावान्नित्यसृष्टिप्रसङ्गाद-

न्यथा नित्यप्रलयप्रसङ्गात् तदभावः ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

परमाणूनां कार्यानुसारेण रूपादिमत्त्वाच्च नित्यत्वविपर्ययो ऽनित्यत्वं स्याद् रूपादिमतां घटादीनामनित्यत्वदर्शनात् अन्यथा कार्यं रूपादिहीनं स्यात् ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

यद्युपचितगुणाः परमाणवस्तदा पृथिव्यप्तेजोवायूनां तुल्यतापत्तिः । अपचितगुणा इत्यत्रापि सर्वेषां परमाणूनां प्रत्येकमेकैकगुणयोगेन पृथिव्यादीनामपि कारणगुणानुगुण्येन प्रत्येकमेकैकगुणयोगः स्यादित्युभयथापि दोषात् तदभाव एव ॥ १६ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

परमाणुकारणवादस्य शिष्टैः परित्यक्तत्वादत्यन्तमनपेक्षा मुमुक्षुभिः कार्या ॥ १७ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

सुगतमतं निराकरोति । भूतभौतिकचित्तचैत्तिकसमुदाये ऽभ्युपगम्यमाने ऽपि समुदायिनामचेतनत्वादन्यस्य संहतिहेतोरनभ्युपगमाच्च समुदायासम्भवः ॥ १८ ॥

इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावाऽनिमित्तत्वात् ॥ १९ ॥

अविद्यासंस्कारविज्ञाननामरूपषडायतनादीनामितरेतरहेतुत्वेन सङ्घातादिकमुपपन्नमित्यपि न तेषामपि सङ्घातं प्रत्यकारणत्वात् ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

इतोपि न तद्दर्शनं युक्तमुत्तरोत्पादे पूर्वस्य क्षणिकत्वे नष्टत्वात् ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

असति हेतौ कार्योत्पत्त्यभ्युपगमे चतुर्भ्यो हेतुभ्य इन्द्रियालोकम-

नस्कारविषयेभ्यो विज्ञानोत्पत्तिरित्यस्याः प्रतिज्ञाया बाधः स्यात्। सति हेतौ कार्योत्पादाङ्गीकारे पूर्वस्मिन् क्षणे स्थिते सति क्षणान्तरोत्पत्तिर्भवेदिदं यौगपद्यं भवतां क्षणिकवादिनां मते स्यात् ॥ २१ ॥

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

सहेतुकनिर्हेतुकयोर्निरोधयोरसम्भवः सन्तानविच्छेदस्यासम्भवात् सन्तानिनां च प्रत्यभिज्ञायमानत्वाच्च ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥

सन्तानस्य सन्तानिव्यतिरिक्तवस्तुत्वाभावात् सन्तानिनां च क्षणिकत्वादविद्यादिनिरोधो मोक्ष इत्यपि तन्मतमसङ्गतम् ॥ २३ ॥

आकाशे चाविशेषात् ॥ २४ ॥

आकाशे च तैरभावप्रतिज्ञा कृता, सा न युक्ता पृथिव्यादिभिरविशेषात् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥

इदं तदिति प्रत्यभिज्ञानाच्च तद्दर्शनमसत् ॥ २५ ॥

नासतोऽदृष्टत्वात् ॥ २६ ॥

अभावाद्भावो नैव जायते ऽदृष्टत्वात् ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

अन्यथानुपायतो विद्याद्यर्थसिद्धिः ॥ २७ ॥

नाभाव उपलब्धेः ॥ २८ ॥

विज्ञानमात्रास्तित्ववाद्याभिमतो बाह्यस्याभावो न किन्तु भाव एव। कुतः। उपलब्धेः ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वप्नादिप्रत्ययदृष्टान्तेनापि न जाग्रत्प्रत्ययार्थाभावः प्रतिपादयितुं शक्यः दृष्टान्तदार्ष्टान्तयोर्वैधर्म्यात् स्वप्नज्ञानस्यापि सालम्बनत्वाच्च ॥ २९ ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

किञ्च ज्ञानवैचित्र्यार्थो वासनानां भावोऽभिप्रेतः, स न सम्भवति तव मते बाह्यार्थानामनुपलब्धेः ॥ ३० ॥

क्षणिकत्वात् ॥ ३१ ॥

न वासनाभावः, आश्रयस्य तव मते क्षणिकत्वात् ॥ ३१ ॥

सर्वथानुपपत्तेश्च ॥ ३२ ॥

शून्यवादोपि भ्रान्तिमूलः सर्वथानुपपन्नत्वात् प्रत्यक्षादिप्रमाणविरोधात् ॥ ३२ ॥

नैकस्मिन्नऽसम्भवात् ॥ ३३ ॥

जैना वस्तुमात्रे ऽस्तित्वनास्तित्वादिविरुद्धधर्मद्वयं योजयन्ति। तन्नोपपद्यते, एकस्मिन् वस्तुनि सत्त्वासत्त्वादेर्विरुद्धधर्मस्य च्छायातपवद्युगपदसम्भवात् ॥ ३३ ॥

एवं चात्माऽकात्स्न्र्यम् ॥ ३४ ॥

एवं शरीरपरिमाणत्वेनाङ्गीकृतस्यात्मनो बृहद्देहप्राप्तावपूर्णता स्यात् ॥ ३४ ॥

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

उपचयापचयाहाववयवानाऽऽत्मा, अतो न विरोध इति च न वक्तुं शक्यं, विकारित्वादिदोषप्रसक्तेः ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अन्त्यस्य परिमाणस्य नियततामङ्गीकृत्य ऽऽदिमध्ययोरपि नित्यत्वमस्तीति चेत्, तर्हि सर्वत्राविशेषः स्यात्, विनष्टो देहपरिमाणवादः ॥ ३६ ॥

पत्युरसामञ्जस्यात् ॥ ३७ ॥

पाशुपतं शास्त्रमुपेक्षणीयम्, जगदभिन्ननिमित्तोपादानकारणप्रतिपादकविरोधित्वादनुपधर्मप्रवर्तकत्वाच्च ॥ ३७ ॥

सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

पशुपतेरशरीरस्य प्रेरकस्य प्रेर्यप्रधानादिभिः सम्बन्धानुपपत्तेश्च न जगद्धेतुत्वम् ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

दृष्टविरुद्धत्वान्नित्यस्योत्तरभावित्वादनित्यस्य च शरीरस्यानुपपत्तेश्च न पशुपतिर्जगद्धेतुः ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

जीववत्करणकलेवरकल्पनापि न सम्भवति भोगादिप्रसक्तेः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

तस्य पुण्यादिरूपादृष्टयोगेऽन्तवत्त्वमज्ञत्वं च स्यात् ॥ ४१ ॥

उत्पत्त्यसम्भवात् ॥ ४२ ॥

पुरुषमन्तरेण शक्तेः सकाशाज्जगदुत्पत्त्यसम्भवान्न तत्कारणवादोपि साधुः ॥ ४२ ॥

न च कर्तुः करणम् ॥ ४३ ॥

पुरुषसंसर्गोस्तीति चेत्, पुरुषस्य करणं नास्ति तदानीम् ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

स्वाभाविकविज्ञानादिभावे खलु जगत्कर्तृत्वे कः प्रतिषेधः, स्वतो विनष्टः शक्तिवादः ब्रह्मस्वीकारात् ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

श्रुतिस्मृतिविप्रतिषेधाच्च शक्तिपक्षोऽप्रामाणिकः ॥ ४५ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

द्वितीयाध्याये तृतीयः पादः ।

## न वियदश्रुतेः ॥ १ ॥

परपक्षेण स्वपक्षस्याविरुद्धत्वं निरूपितम् । अधुना श्रुतीनामन्योन्यविरोधाभावो निरूप्यते । वियन्नोत्पद्यते । कुतः । छान्दोग्ये तदुत्पत्त्य श्रवणादिति पूर्वः पक्षः ॥ १ ॥

## अस्ति तु ॥ २ ॥

तत्रोच्यते । आत्मन आकाशः सम्भूत इति तैत्तिरीयके ऽस्ति वियदुत्पत्तिरिति ॥ २ ॥

## गौण्यसम्भवाच्छब्दाच्च ॥ ३ ॥

शङ्कते । निरवयवस्याकाशस्योत्पत्त्यसम्भवात् वायुश्चान्तरिक्षं चैतदमृतमिति शब्दाच्चाकाशः सम्भूत इति श्रुतिर्गौणी ॥ ३ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

एकस्य सम्भूतशब्दस्याकाशे गौणत्वमुत्तरत्र मुख्यत्वं तु तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेतिवत् स्यात् ॥ ४ ॥

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ५ ॥

शङ्का निराक्रियते । आकाशादिवस्तुजातस्य ब्रह्माऽव्यतिरेकाद्ब्रह्मविज्ञानात् सर्वविज्ञानप्रतिज्ञाया अनुपरोधो भवति । आकाशस्यानुत्पन्नत्वे तु स विज्ञेयव्यतिरेकः स्यात्, तस्मात् सा बाध्येत । सर्वस्य ब्रह्मापृथक्त्वं च ऐतदात्म्यमिदमित्यादिशब्देभ्यः ॥ ५ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ६ ॥

उपसंहरति । ऐतदात्म्यमिदं सर्वमित्यादिवाक्यैराकाशादिप्रपञ्चस्य ब्रह्मात्मकत्वप्रतिपादनेन विकारत्वं निश्चीयते । तथा च यावद्विकारमुद्भव एव गम्यते । तत्तेजोऽसृजतेत्याद्या(दावाऽऽ)काशस्यानुक्तिस्तेज आदेः सृज्यत्वेनोक्तिश्च लोकवदुपपद्यते । लोके देवदत्तपुत्रपूगं

निर्दिश्य तत्र कतिपयानामुत्पत्तिकथनेन सर्वेषामुत्पत्तिरुक्ता भवति ॥ ६ ॥

एतेन मातरिश्वा व्याख्यातः ॥ ७ ॥

अनेन वियदुत्पत्तिन्यायेन वायुरपि व्याख्यातः ॥ ७ ॥

असम्भवस्तु सतोनुपपत्तेः ॥ ८ ॥

सतो ब्रह्मणोऽसम्भवोऽनुत्पत्तिरेव, जगत्कारणोत्पत्त्यनुपपत्तेः ॥ ८ ॥

तेजोऽतस्तथाह्याह ॥ ९ ॥

पूर्वपक्षयति। मातरिश्वनस्तेजो जायते वायोरग्निरिति श्रुतेः ॥ ९ ॥

आपः ॥ १० ॥

तेजस आपो जायन्ते अग्नेराप इति श्रुतेः ॥ १० ॥

पृथिवी ॥ ११ ॥

अद्भ्यो भूर्भवति ता अन्नमसृजन्तेति श्रुतेः ॥ ११ ॥

पृथिव्यऽधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

अन्नपदेन भूरुच्यते महाभूताधिकारात् यत्कृष्णं तदन्नस्येति रूपश्रवणादद्भ्यः पृथिवीति शब्दान्तराच्च ॥ १२ ॥

तदभिध्यानात् तु तल्लिङ्गात् सः ॥ १३ ॥

सिद्धान्तयति। बहु स्यामिति तदभिध्यानात् तदात्मानं स्वयमकुरुतेत्यादितज्ज्ञापकात् शास्त्राच्च परमपुरुषस्तदन्तरात्मा तत्तत्कार्यस्रष्टेति ॥ १३ ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

अत उक्तसृष्टिक्रमात् प्रातिलोम्येन प्रलयक्रमोस्ति, पृथिव्यप्सु प्रलीयत इत्यादिश्रुतेः जललवणन्यायेनोपपद्यते च ॥ १४ ॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्ना-
विशेषात् ॥ १५ ॥

विज्ञानमनसी एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेत्यादि-लिङ्गात् परमात्मनो भूतानां चान्तराले स्याताम्, एवं प्राप्तेन क्रमेण पूर्वोक्तस्य क्रमस्य विरोध इति चेन्न वाक्यस्य क्रमविशेषपरत्वाभावात् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेत्यनेन ब्रह्मणः सकाशादेव विज्ञानमनसोः खादीनां चोत्पत्तेरविशेषात् । प्रकृते भूतोत्पत्ति-क्रमप्रतिपादके वाक्ये तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुरित्यादौ आत्मन आकाशस्य चान्तराले सृष्टिसंहारक्रमबोधकवाक्यान्तरप्रसिद्धानि विज्ञानमनसी इत्यनेनोपलक्षितान्यव्यक्तमहदहङ्कारादीनि तत्त्वानि ज्ञेयानीति सङ्क्षेपः ॥ १५ ॥

चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्त-
द्भावभावित्वात् ॥ १६ ॥

जीवात्मा निर्णीयते । देवदत्तो जातो मृत इति व्यपदेशो गौणोऽस्ति । यतश्चराचरव्यपाश्रयः शरीरभावे जन्ममरणयोर्भावित्वात् ॥ १६ ॥

नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

जीवो नोत्पद्यते । कुतः । स्वरूपतस्तदुत्पत्तिवचनाभावात् । न जायते म्रियते वा विपश्चित् नित्यो नित्यानाम् अजो ह्येको जुषमाणोऽनुशेते इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च ॥ १७ ॥

ज्ञोऽत एव ॥ १८ ॥

अहमर्थभूत आत्मा ज्ञाता भवति ॥ १८ ॥

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

जीवोऽणुः अनेन प्रद्योतनेनैष(प्रद्योतेनैष)आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः ये वै केचनास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे इत्युत्क्रान्तिगत्यागतीनां श्रवणात् ॥ १९ ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचित् स्थिरस्यापि ग्राम्य(म)स्वाम्यनिवृत्तिवत् स्यात् । उत्तरयोः स्वात्मनैव सम्भवाज्जीवोऽणुः ॥ २० ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

जीवं प्रस्तुत्य स वा एष महानित्यऽतद्वचनान्न जीवोऽणुरिति चेन्न, मध्ये परमात्मनोऽधिकारात् ॥ २१ ॥

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

एषोऽणुरात्मा बालाग्रशतभागस्य शतधाकल्पितस्य च भागो जीव इति स्वशब्दोन्मानाभ्यां जीवोऽणुः ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

देहैकदेशस्थोऽपि कृत्स्नं देहं चन्दनबिन्दुर्यथा ह्लादयति तथा जीवोऽपि प्रकाशयति । अतः कृत्स्नशरीरे सुखाद्यनुभवो न विरुध्यते ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि ॥ २४ ॥

अवस्थितिविशेषभावाद् दृष्टान्तवैषम्यमिति चेन्न देहैकदेशे हरिचन्दनवद्धृदि ह्ययमात्मेति जीवावस्थित्यभ्युपगमात् ॥ २४ ॥

गुणाद्वाऽऽलोकवत् ॥ २५ ॥

देहे प्रकाशो जीवगुणादेव कोष्ठे दीपालोकादिवत् ॥ २५ ॥

व्यतिरेको गन्धवत् तथाहि दर्शयति ॥ २६ ॥

गुणभूतस्य ज्ञानस्य व्यतिरेकस्तु गन्धवदुपपद्यते, एतादृशगुणाश्रयं जीवं स एष प्रविष्ट आ लोमभ्य आ नखेभ्य इति श्रुतिर्दर्शयति ॥ २६ ॥

पृथगुपदेशात् ॥ २७ ॥

जीवतज्ज्ञानयोर्ज्ञानत्वाविशेषेऽपि धर्मधर्मिभावो युक्त एव । कुतः ।

प्रज्ञया शरीरमारुह्येत्यादिपृथगुपदेशात् ॥ २७ ॥

तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् ॥ २८ ॥

बृहन्तो गुणा यस्मिन्निति ब्रह्मेति प्राज्ञवदात्मा विभुगुणत्वान्नित्यं विभुमिति व्यपदिष्टः। दृष्टान्ते बृहदेव प्राज्ञो गुणैरपि बृहद्भवति, दार्ष्टान्ते तु जीवोऽणुपरिमाणको गुणेन विभुरिति विशेषः ॥ २८ ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २९ ॥

जीवस्य गुणनिबन्धनो विभुत्वव्यपदेशो न विरुद्धः गुणस्य यावदात्मभावित्वात्। नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादविनाशी वा अरे अयमात्मेति तद्दर्शनात् ॥ २९ ॥

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३० ॥

अस्य ज्ञानस्य सुषुप्त्यादौ सत एव जाग्रदादावभिव्यक्तिसम्भवाद्यावदात्मभावित्वमेव, यथा पुंस्त्वादेर्बाल्ये सत एव यौवने ऽभिव्यक्तिः ॥ ३० ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३१ ॥

सर्वगतात्मवादे आत्मोपलब्ध्यनुपलब्ध्योर्बन्धमोक्षयोर्नित्यं प्रसङ्गः स्यान्नित्यबद्धो वा नित्यमुक्तो वात्मेत्यन्यतरनियमो वा स्यात् ॥ ३१ ॥

कर्ता शास्त्रार्थवत्त्वात् ॥ ३२ ॥

आत्मैव कर्ता स्वर्गकामो यजेत मुमुक्षुर्ब्रह्मोपासीतेत्यादेर्भुक्तिमुक्त्युपायबोधकस्य शास्त्रस्यार्थवत्त्वात् ॥ ३२ ॥

विहारोपदेशात् ॥ ३३ ॥

स्वे शरीरे यथाकामं परिवर्तते इति विहारोपदेशात् स कर्ता ॥ ३३ ॥

उपादानात् ॥ ३४ ॥

तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति चोपादानश्रवणा-

असन्ततेश्चाव्यतिकरः ॥ ४८ ॥

विभोरंशत्वे ऽपि गुणेन विभुत्वे ऽपि चात्मनां स्वरूपतोऽणुत्वेन सर्वगतत्वाभावात् कर्मादिव्यतिकरो नास्ति ॥ ४८ ॥

आभासा एव च ॥ ४९ ॥

परेषां कपिलादीनां व्यतिकरप्रसङ्गात् सर्वगतात्मवादाश्चाभासा एव ॥ ४९ ॥

अदृष्टानियमात् ॥ ५० ॥

सर्वगतात्मवादे ऽदृष्टमाश्रित्यापि व्यतिकरो दुर्वारः, अदृष्टाऽनियमात् ॥ ५० ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥

अहमिदं करिष्ये इदं नेति सङ्कल्पादिष्वप्येवमनियमः ॥ ५१ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५२ ॥

स्वशरीरस्थात्मप्रदेशात् सर्वं समञ्जसमिति चेत् न, तत्र सर्वेषामात्मप्रदेशानामन्तर्भावात् ॥ ५२ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥



## द्वितीयाध्यायस्य चतुर्थः पादः ।

### तथा प्राणाः ॥ १ ॥

करणोत्पत्तिश्चिन्त्यते । खादिवदिन्द्रियाणि जायन्ते ॥ १ ॥

### गौण्यसम्भवात् ॥ २ ॥

न चैतस्मादात्मन आकाशः सम्भूत इत्यादिसृष्टिप्रकरणे करणोत्पत्त्यश्रवणात् करणोत्पत्तिश्रुतिर्गौणीति वाच्यम् । उत्पत्तिश्रुतिभूयस्त्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्च गौण्यसम्भवात् ॥ २ ॥

### तत्प्राक्छ्रुतेश्च ॥ ३ ॥

तस्मिन् वाक्ये खादिषु मुख्यस्य क्रियापदस्येन्द्रियेष्वपि श्रुतेरिन्द्रियोद्भवो मुख्यः ॥ ३ ॥

### तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

प्राणाः खादिवदुत्पद्यन्ते, वाक्प्राणमनसामन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागित्यनेन तेजोबन्नपूर्वकत्वाभिधानात् ॥ ४ ॥

### सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

तानि सप्तैकादश वेति संशये प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति गते,स्तत्र सप्तानामेव न पश्यति न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशतीति विशेषितत्वाच्च सप्तैवेन्द्रियाणीति पूर्वः पक्षः ॥ ५ ॥

### हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

सप्तभ्योऽतिरिक्ते हस्तौ वै ग्रह इत्यादिना निश्चिते सप्तैवेन्द्रियाणीति नैवं मन्तव्यम् । दशेमे पुरुषे प्राणा आत्मैकादश इति श्रुतेरेकादशेन्द्रियाणीति सिद्धान्तः ॥ ६ ॥

अणवश्च ॥ ७ ॥

सर्वे प्राणा अनूत्क्रामन्तीत्युत्क्रान्तिश्रुतेः प्राणा अणवः ॥ ७ ॥

श्रेष्ठश्च ॥ ८ ॥

श्रेष्ठो मुख्यः प्राणो वाव ज्येष्ठः श्रेष्ठश्चेति श्रुतिप्रोक्तः प्राणो महाभूतादिवदुत्पद्यते। कुतः। एतस्माज्जायते प्राण इति समानश्रुतेः ॥ ८ ॥

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

वायुमात्रं करणक्रिया वा प्राणो न भवति, किं तु वायुरेवावस्थान्तरमापन्नः प्राण इत्युच्यते, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुरिति पृथगुपदेशात् ॥ ९ ॥

चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

श्रेष्ठोपि प्राणश्चक्षुरादिवज्जीवोपकरणविशेषः। कुतः। प्राणसंवादादिषु चक्षुरादिभिः सह प्राणस्य शिष्ट्यादिभ्यः शासनादिभ्यः ॥ १० ॥

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

ननु प्राणस्य जीवोपकरणत्वे तदनुरूपकार्याभावेनाकरणत्वाद्दोष इति, न। यतो देहेन्द्रियविधारणं प्राणस्याऽसाधारणं कार्यमऽहमेवैतत् पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति श्रुतिर्दर्शयति ॥ ११ ॥

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

यथा बहुवृत्ति मनः स्ववृत्तिभिः कामादिभिर्जीवस्योपकरोति तथाऽपानादिवृत्तिभिः पञ्चवृत्तिः प्राणोऽपि जीवोपकारकत्वेन व्यपदिश्यते ॥ १२ ॥

अणुश्च ॥ १३ ॥

उत्क्रान्तिश्रुतेः प्राणोणुश्च ॥ १३ ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

वागादिकरणजातमग्न्यादिदेवताप्रेरितं कार्ये प्रवर्तते, ऽग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिश्रुतेः ॥ १४ ॥

प्राणवता शब्दात् ॥ १५ ॥

जीवेनैवेन्द्रियाणां स्वस्वामिभावः सम्बन्धः, स भोक्ताऽथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरित्यादिशब्दात् ॥ १५ ॥

तस्य नित्यत्वात् ॥ १६ ॥

उक्तलक्षणस्य सम्बन्धस्य जीवेनैव नित्यत्वान्न त्वधिष्ठातृदेवताभिः ॥ १६ ॥

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

श्रेष्ठप्राणभिन्नत्वेन तेषां प्राणानामेतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति व्यपदेशात् ते प्राणा इन्द्रियसञ्ज्ञकानि तत्त्वान्तराणि न तु श्रेष्ठवृत्तिविशेषाः ॥ १७ ॥

भेदश्रुतेर्वैलक्षण्याच्च ॥ १८ ॥

वागादिप्रकरणमुपसंहृत्याथ हेममाऽऽसन्यं प्राणमूचुरिति तेभ्यो वागादिभ्यः श्रेष्ठस्य प्राणस्य भेदश्रवणात् देहेन्द्रियादिस्थितिहेतोः श्रेष्ठात् प्राणादिन्द्रियाणां विषयग्राहकत्वेन वैलक्षण्याच्च तानि तत्त्वान्तराणि ॥ १८ ॥

सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १९ ॥

सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति नामरूपव्याकरणमपि त्रिवृत्कुर्वतः परस्यैव कर्म, य एकैकां देवतां निरूपामकरोत् स एव हि अग्न्यादित्यादीनां नामरूपकर्ता । कुतः । सेयं देवतेत्युपक्रम्यानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति व्याकरणस्य परदेवताकर्तृकत्वोपदेशात् ॥ १९ ॥

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २० ॥

तेषां त्रिवृत्कृतानां तेजोबन्नानां कार्याणि शरीरे शब्दादेवावगन्तव्यानि । भूमेः पुरीषं मांसं मनश्चेति अपां मूत्रं लोहितं प्राणश्चेति तेजसोऽस्थि मज्जा वाक् चेति ॥ २० ॥

वैशेष्यात् तु तद्वादस्तद्वादः ॥ २१ ॥

तेषां भेदेन ग्रहणं तु भागभूयस्त्वात् ॥ २१ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजातसौरभे द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चायं द्वितीयाध्यायः ॥ २ ॥

---

## तृतीये ऽध्याये प्रथमः पादः ।

---

### तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्न-निरूपणाभ्याम् ॥ १ ॥

समन्वयाविरोधाभ्यां साध्ये निश्चिते ऽथ साधनानि निरूप्यन्ते । तत्रादौ वैराग्यार्थं स्वर्गादिगमनागमनादिदोषान् दर्शयति । उक्तलक्षणः प्राणादिमान् जीवो हि सूक्ष्मभूतसम्परिष्वक्त एव देहं विहाय देहान्तरं गच्छतीति वेत्थ यथा पञ्चम्यामाहुतावाऽऽपः पुरुषवचसो भवन्तीत्यादिप्रश्ननिरूपणाभ्यां गम्यते ॥ १ ॥

### त्र्यात्मकत्वात् तु भूयस्त्वात् ॥ २ ॥

त्रिवृत्करणश्रुत्याऽपां त्र्यात्मकत्वादितरयोरपि ग्रहणम् । केवलाब्ग्रहणं तु तद्भूयस्त्वादुपपद्यते ॥ २ ॥

### प्राणगतेश्च ॥ ३ ॥

तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति प्राणगतिश्रवणाच्च भूतसूक्ष्मपरिवृत एव गच्छति ॥ ३ ॥

### अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमित्यादिना वागादीनामग्न्यादिषु गतेर्लयस्य श्रवणान्न तेषां जीवेन सहगमनमिति चेन्न, अग्न्यादिगतिश्रुतेरोषधीर्लोमानि वनस्पतीन् केशा इति सहपाठेन भाक्तत्वात् ॥ ४ ॥

### प्रथमे ऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

प्रथमे ऽग्नावपाम ऽश्रवणात् कथं पञ्चम्यामाहुतौ तासां पुरुषभाव इति चेन्न, यतः, श्रद्धाशब्देन ता एवोच्यन्ते उपक्रमाद्युपपत्तेः ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

भूतसम्परिष्वक्तो जीवो रंहतीति न वक्तुं शक्यम् अबादिवज्जीवस्याश्रवणादिति चेन्न, इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्यादिनेष्टादिकारिणां धूममार्गेण चन्द्रलोकप्राप्तिं निरूप्य त एव सोमशब्देन श्रुत्या निरूप्यन्ते । एष सोमो राजा सम्भवतीत्यऽत्रापि सोमो राजा सम्भवतीत्यनेन प्रतीतेः ॥ ६ ॥

भाक्तं वा ऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ७ ॥

केवलकर्मिणामनात्मवित्त्वाद्देवान् प्रति गुणभावे सति तद्देवानामन्नं तं देवा भक्षयन्तीति इष्टादिकारिणामन्नत्वेन भक्षत्वं भाक्तम्, पशुरेव स देवानामिति श्रुतेः ॥ ७ ॥

कृतात्यये ऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥ ८ ॥

आमुष्मिकफलप्रदकर्मक्षये सति ऐहिकफलप्रदकर्मवान् यथागतमनेवं च प्रत्यवरोहति तद्य इह रमणीयचरणा अभ्यासो(शो) ह यत्ते रमणीयां योनिमापद्येरन्नित्यादिश्रुतेः वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टजातिकुलरूपायुःश्रुतवृत्तसुखमेधसो जन्म प्रतिपद्यन्त इति स्मृतेश्च ॥ ८ ॥

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

ननु रमणीयचरणा इत्यत्र चरणमाचार,स्तस्माद्वैषम्यसिद्धौ न सानुशयस्यावरोहः सम्भवतीति चेन्न, यत,श्चरणश्रुतिः कर्मोपलक्षणार्था—इति कार्ष्णाजिनिर्मन्यते ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

ननु तथात्वे चरणस्यानर्थक्यं स्यादिति चेन्न, कर्मणां चरणापेक्षत्वात् ॥ १० ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

सुकृतदुष्कृते कर्मणी चरणशब्देनोच्येते इति बादरिः ॥ ११ ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

अनिष्टादिकारिगतिश्चिन्त्यते। तत्र तावत् पूर्वः पक्षः—निषिद्धसक्तानां विहितविरक्तानां दुष्टानामपि ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति गमनं श्रुतम् ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गति-
दर्शनात् ॥ १३ ॥

यमालये दुःखमनुभूयाऽनिष्टादिकारिणां चन्द्रमण्डलारोहावरोहौ, पुनःपुनर्वशमापद्यते मे वैवस्वतं संयमनं जनानामित्यादिषु यमालयगमनदर्शनात् ॥ १३ ॥

स्मरन्ति च ॥ १४ ॥

पराशरादयो यमवश्यत्वं स्मरन्ति च ॥ १४ ॥

अपि सप्त ॥ १५ ॥

रौरवादीन् सप्त नरकानपि स्मरन्ति ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

रौरवादिष्वपि चित्रगुप्तादीनामधिष्ठातॄणां यमायत्ततया यमस्यैव व्यापारात् तत्रान्येऽप्यधिष्ठातार इति नास्ति विरोधः ॥ १६ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

अथ राद्धान्तः। पञ्चाग्निविद्यायामथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न सम्पूर्यत इत्यनिष्टादिकारिणामनवरोहं दर्शयति। पथोरिति च विद्याकर्मणोर्निर्देशः,तयोः प्रकृतत्वात्। तद्य इत्थं विदुरिति देवयानः पन्था, इष्टापूर्ते दत्तमिति पितृयाण,स्तयोरन्यतरेणापि ये न गच्छन्ति तानीमानि तृतीयस्थानभाञ्जि भूतानीति पापिनां चन्द्रगतिर्नास्तीति वाक्यार्थः ॥ १७ ॥

न तृतीये तथोपलब्धेः ॥ १८ ॥

तृतीये स्थाने ऽनिष्टादिकारिदेहारम्भार्थमपि पञ्चमाहुत्यपेक्षा नास्ति।

श्रद्धादिक्रमप्राप्तां पञ्चमाहुतिं विनापि जायस्वेति देहारम्भोपलब्धेः ॥ १८ ॥

स्मर्यते ऽपि च लोके ॥ १९ ॥

जज्ञे द्रोणविनाशाय पावकादिति नः श्रुतमित्यादिनेष्टादिकारिणामपि धृष्टद्युम्नप्रभृतीनां पञ्चमाहुतिं विनैव देहोत्पत्तिः स्मर्यते ॥ १९ ॥

दर्शनाच्च ॥ २० ॥

चतुर्विधेषु भूतेषु स्वेदजोद्भिज्जयोः स्त्रीपुरुषसङ्गमऽन्तरेणोत्पत्तिदर्शनाच्च न पञ्चमाहुत्यपेक्षा ॥ २० ॥

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

अण्डजं जीवजमुद्भिज्जमित्यत्र तु तृतीयशब्देन स्वेदजस्य संग्रहः, अतो न चातुर्विध्यहानिः ॥ २१ ॥

तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

अवरोहप्रकारश्चिन्त्यते। अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षतीत्यत्र देवादिभाववदाकाशादिभाव उत सादृश्यप्राप्तिमात्रमिति सन्देहे आकाशादिभाव इति प्राप्ते उच्यते तत्सादृश्यापत्तिरिति । कुतः । सादृश्यप्राप्तेरेवोपपन्नत्वात् ॥ २२ ॥

नातिचिरेण विशेषात् ॥ २३ ॥

जीवोऽल्पेन कालेनाकाशादिवर्षान्तसाम्यं विजहाति, पृथिवीं प्रविश्य व्रीह्यादिभावमापद्यते, अतः खलु दुर्निष्प्रतरमिति विशेषवचनात् । व्रीह्यादिभावाद् दुःखतरनिःसरणवाक्यं पूर्वत्राचिरकालिकमवस्थानं द्योतयति ॥ २३ ॥

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते, तत्रान्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ जायन्ते संसर्गमात्रं प्राप्नुवन्तीत्यर्थो ज्ञ-

थः। कुतः। आकाशादिभिरिव तेषां व्रीह्यादिभिरपि संसर्गमात्रकथनात् ॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

तेषां व्रीह्यादिस्थावरयोनिप्रापकं हिंसायोगाज्ज्योतिष्टोमाद्यऽशुद्धं कर्मास्तीति चेत्, ज्योतिष्टोमादेरशुद्धत्वं नास्ति, विधिशास्त्रात् ॥२५॥

रेतःसिग्योगोथ ॥ २६ ॥

योयो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवतीति सिग्भाववद् व्रीह्यादिभावोपि ॥ २६ ॥

योनेः शरीरम् ॥ २७ ॥

योनिमाश्रित्य शरीरी भवति ॥ २७ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे तृतीयाध्यायस्य
प्रथमः पादः ॥ १ ॥

## तृतीयाध्यायस्य द्वितीयः पादः ।

### सन्ध्ये सृष्टिराह हि ॥ १ ॥

एवं जाग्रतो जीवस्य वैराग्यार्थं संसारगतिरुदीरिता, अथ स्वप्नादि निरूप्यते । स्वप्नमधिकृत्याथ न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते इत्यादि श्रूयते, तत्र रथादिसृष्टिर्जीवकृता न ब्रह्मकृतेति सन्देहे, सन्ध्ये स्वप्नस्थाने रथादिसृष्टिर्जीवकृता, हि यतः सृजते स कर्तेति श्रुतिराह ॥ १ ॥

### निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाण इति स्वप्ने एके जीवं कामानां पुत्रादिरूपाणां कर्तारं समामनन्तीति पूर्वः पक्षः ॥ २ ॥

### मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तत्राभिधीयते । सत्यसंकल्पसर्वज्ञपरमेश्वरनिर्मितमेव रथादि कार्यजातम्, यतो ह्याश्चर्यभूतं तन्न जीवकृतम्, तदीयसत्यसङ्कल्पत्वादेर्बद्धावस्थायां साकल्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

### सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥ इति

अथ यदा स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीति श्रुतेः स्वप्नः साध्वागमासाध्वागमयोः सूचकोवगम्यते । एतदेव स्वप्नफलविद आचक्षते । अतो बुद्धिपूर्वकेष्टागमसूचकस्वप्नाऽदर्शनाद्दैवादेवाऽनिष्टागमसूचकस्वप्नदर्शनाच्च परमात्मैव स्वाप्नरथादिनिर्माता ॥ ४ ॥

### पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्ध-

विपर्ययौ ॥ ५ ॥

सत्यसङ्कल्पादिकं स्वाप्नपदार्थनिर्मातृत्वे जीवस्यावश्यमङ्गीकरणीयम् । तच्च जीवकर्मानुरूपात् परमेश्वरसङ्कल्पाद् बद्धावस्थायां तिरोहितम् । तस्मादेव जीवस्य बन्धमोक्षौ भवतः । संसारबन्धस्थितिमोक्षहेतुरिति श्रुतेः ॥ ५ ॥

देहयोगाद्वा सोपि ॥ ६ ॥

स च तिरोभावोऽविद्यायोगद्वारेण भवति ॥ ६ ॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

स्वप्नसृष्टिनिर्माता परमात्मा, सुषुप्तिरपि नाडीपुरीतत्प्रवेशानन्तरं खलु परमात्मन्येव भवति । आसु तदा नाडीषु सृप्तो भवतीति ताभिः प्रत्यवसृप्य पुरीतति शेते इति य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते इति च श्रवणात् ॥ ७ ॥

अतः प्रबोधोस्मात् ॥ ८ ॥

अत एव सत आगम्येत्यादौ श्रूयमाणं परमेश्वरादुत्थानमभ्युपपद्यते ॥ ८ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

यः सुप्तः स एव जीव उत्तिष्ठति, यस्मात् पूर्वेद्युः कर्मणोऽर्द्धं कृत्वा परेद्युरनुस्मृत्य तदर्द्धं करोति, त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्तीत्यादिशब्देभ्यः, अग्निहोत्रं जुहुयादात्मानमुपासीतेत्यादिविधिभ्यः ॥ ९ ॥

मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

मूर्च्छिते मरणार्द्धसम्पत्तिः, सुषुप्त्यादिषु मूर्छा नैकतमा, अतः परिशेषात् सा तदतिरिक्ता ॥ १० ॥

न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

अकर्मवश्यत्वात् सर्वान्तर्वर्तिनोपि परमात्मनस्तत्रतत्र दोषा न

सम्भवन्तीत्युपपादितमेव। स्थानतोपि दोषाः परस्य न, यतः, सर्वत्र ब्रह्मनिर्दोषत्वस्वाभाविकगुणात्मकत्वाभ्यां युक्तमाम्नातम् ॥ ११ ॥

भेदादिति चेन्न प्रत्येकमऽतद्वचनात् ॥ १२ ॥

वस्तुतोऽपहतपाप्मत्वादियुक्तस्यापि जीवस्य देहयोगेनावस्थाभेदाद्दोषाः सन्त्येव, तथा परस्यापि भवन्त्विति चेन्न, प्रत्येकमन्तर्यामिणो दोषापादकवचनाभावात् एष त आत्मान्तर्याम्यमृत इत्यमृतत्ववचनात् ॥ १२ ॥

अपि चैवमेके ॥ १३ ॥

अपि च तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीतीति एके शाखिनोऽधीयते ॥ १३ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

नामरूपे व्याकरवाणीत्यस्मिन् कार्येपि परस्य नामरूपनिर्वाहकत्वेन प्रधानत्वाद्धेतोः स्वोत्पाद्यनामरूपभोक्तृत्वाभावाद् ब्रह्म ऽरूपवद्भवति। अतो दोषगन्धानाघ्रातं ब्रह्म ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

तम अस्पृष्टं(तमसा अस्पृष्ट) प्रकाशवदेवंभूतमुभयलिङ्गं ब्रह्म, आदित्यवर्णं तमसः परस्तादित्यनेनैकेनैव वाक्येनाभिधीयते, वाक्यस्यावैयर्थ्यात् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥

वाक्यं यावान् यस्यार्थस्तावन्मात्रमाह यदा, तदा तदवैयर्थ्यं बोध्यम् ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

य आत्मापहतपाप्मा निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं सत्यकामः सत्यसङ्कल्प इत्यादिवाक्यगण उभयलिङ्गं ब्रह्म दर्शयति। अथ स्मर्यतेपि—

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

इत्यादिना ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यतः सर्वगमपि ब्रह्मोभयलिङ्गत्वान्निर्दोषमेव, अत एव यथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमानित्यादौ शास्त्रे ब्रह्मणो निर्दोषत्वं ख्यापयितुं सूर्यकादिवदुपमोच्यते ॥ १८ ॥

अम्बुवदग्रहणात् तु न तथात्वम् ॥ १९ ॥

शङ्कते । सूर्यादम्बु दूरस्थं गृह्यते, तद्वत् स्थानिनः सकाशात् स्थानस्याग्रहणाद् दृष्टान्तवैषम्यमिति ॥ १९ ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

तत्राह । स्थानिनः स्थानान्तर्भावात् तत्प्रयुक्तवृद्धिह्रासभाक्त्वं दृष्टान्तेन निराक्रियते । उभयसामञ्जस्यादेवं विवक्षितांशमात्रं गृह्यते ॥ २० ॥

दर्शनाच्च ॥ २१ ॥

सिंह इव माणवक इति लोके दर्शनाच्चैवम् ॥ २१ ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति
च भूयः ॥ २२ ॥

किं नेति नेतीति वाक्यं द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेत्यादिना प्रकृतं मूर्तामूर्तादिरूपं प्रतिषेधत्यथवा प्रकृतरूपयोगात् प्राप्तं ब्रह्मण एतावत्त्वमिति सन्देहे रूपं प्रतिषेधतीति प्राप्ते उच्यते–प्रकृतैतावत्त्वमेव प्रतिषेधति, ततो भूयो न ह्येतस्मादिति नेत्यन्यत् परमस्तीत्यादिवाक्यशेषो ब्रवीति ॥ २२ ॥

तदव्यक्तमाह हि ॥ २३ ॥

न चक्षुषा गृह्यते नापि वाचेत्यादिशास्त्रं ब्रह्माव्यक्तमाह ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

भक्तियोगे ध्याने तु व्यज्यते ब्रह्म,
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥

इत्यादिश्रुतिस्मृतिभ्याम् ॥ २४ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्य
ऽभ्यासात् ॥ २५ ॥

सूर्याग्न्यादीनां तदर्थिकृतसाधनाभ्यासादाविर्भावः, तद्वद्ब्रह्मणोऽप्यवैशेष्यम् । संराधनलक्षणादुपायाद् ब्रह्मदर्शनं भवतीत्यर्थः ॥ २५ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

ब्रह्मसाक्षात्काराद्धेतोस्तेन सह साम्यं याति,
यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्म योनिम् ।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्य मुपैति ॥

इति ज्ञापकात् ॥ २६ ॥

उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २७ ॥

मूर्तामूर्तस्याप्रतिषेध्यत्वं द्रढयति मूर्तामूर्तादिकं विश्वं ब्रह्मणि स्वकारणे भिन्नाभिन्नसम्बन्धेन स्थातुमर्हति, भेदाभेदव्यपदेशादहिकुण्डलवत् ॥ २७ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

जीवपुरुषोत्तमयोरपि तथा सम्बन्धो ज्ञेयः । उभयव्यपदेशात्, प्रभातद्वतोरिव । अतोऽनन्तेनेत्यनेन केवलभेदो न शङ्क्य इति भावः ॥ २८ ॥

पूर्ववद्वा ॥ २९ ॥

कृत्स्नप्रसक्त्यादिदोषाभावश्च पूर्ववद्बोध्यः ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥

न लिप्यते लोकदुःखेनेत्यादिप्रतिषेधाच्च न प्रकृतस्य ब्रह्मणो दोषयोगः ॥ ३० ॥

परमऽतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

पूर्वपक्षयति। अतः प्रकृताद् ब्रह्मणः परमपि किञ्चित् तत्त्वमस्ति, अथ य आत्मा स सेतुरिति सेतुव्यपदेशात्। चतुष्पाद्ब्रह्म षोडशकलमित्युन्मानव्यपदेशात्। अमृतस्यैष सेतुरिति सम्बन्धव्यपदेशात्। तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तदरूपमनामयमिति भेदव्यपदेशाच्च ॥ ३१ ॥

सामान्यात् तु ॥ ३२ ॥

सिद्धान्तमाह। तुशब्दः पक्षनिषेधार्थः। न जगत्कारणात् सर्वेश्वरात् परं किञ्चिदस्ति, सेतुव्यपदेशस्तावद्विधरणसारूप्यात् ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

उन्मानव्यपदेश उपासनार्थः। मनो ब्रह्मेत्युपासीतेत्यध्यात्मं तदेतच्चतुष्पाद् ब्रह्म वाक् पाद इत्यादिपादव्यपदेशवत् ॥ ३३ ॥

स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

अपरिमितस्य परिमितत्वेन चिन्तनं स्थानविशेषात् प्रकाशादिवदुपपद्यते ॥ ३४ ॥

उपपत्तेः ॥ ३५ ॥

स्वस्य स्वप्रापकतया सम्बन्धव्यपदेशोपपत्तेश्च तत्त्वान्तराभावः ॥ ३५ ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥

तथा ततो यदुत्तरतरमिति भेदव्यपदेशाद् ब्रह्मेतरत् तत्त्वमस्तीत्यपि न वाच्यम्, यस्मात् परं नापरमस्ति किञ्चिदिति प्रतिषेधात् ॥ ३६ ॥

फलमत उपपत्तेः ॥ ३८ ॥

अतो ब्रह्मण एव तत्तदधिकारिणां तत्तदनुरूपं फलं भवत्यस्यैव तद्दातृत्वोपपत्तेः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

स वा एष महानज आत्मान्नादो वसुदानः एष एवानन्दयतीति तत्फलदत्वस्य श्रुतत्वाच्च ॥ ३९ ॥

धर्मं जैमिनिरत एव ॥ ४० ॥

धर्मं फलहेतुं जैमिनिर्मन्यते कृष्यादिवत् तस्यैव तद्धेतुत्वोपपत्तेः । यजेत स्वर्गकाम इति तद्धेतुत्वश्रवणाच्च ॥ ४० ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्दः पक्षनिरासार्थः । फलदं पूर्वोक्तं परमात्मानं वेदाचार्यो मन्यते, पुण्येन पुण्यं लोकं नयतीति यमेवैष वृणुते तेन लभ्य इति च परस्य तद्धेतुत्वव्यपदेशात् ॥ ४१ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे तृतीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

## तृतीयाध्यायस्य तृतीयः पादः ।

### सर्ववेदान्तप्रत्ययं चोदनाद्यऽविशेषात् ॥ १ ॥

अनेकत्र प्रोक्तमप्युपासनमेकमेव, चोदनाद्यऽविशेषात् ॥ १ ॥

### भेदान्नेति चेदकस्यामपि ॥ २ ॥

विद्यायां पुनः श्रुत्या वेद्यभेदान्न विद्यैक्यमिति चेत् न क्वचित् प्रतिपत्तृभेदात् क्वचित् प्रकरणशुद्ध्यर्थमेकस्यामपि विद्यायां पुनरुक्त्याद्युपपत्तेः ॥ २ ॥

### स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

यच्चाथर्वणे तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमिति शिरोव्रतम्, तदपि विद्याभेदकं न, यतः स्वाध्यायाध्ययनाङ्गतया शिरोव्रतं विधीयते। तस्याध्ययनाङ्गत्वे सति आथर्वणिकेतराग्राह्यतया तन्नियमोऽस्ति। यतः समाचाराख्ये ग्रन्थेऽपि वेदव्रतत्वेन शिरोव्रतमामनन्ति। नैतदचीर्णव्रतोऽधीत इति वचनाच्च। सौर्यादिहोमवच्च तन्नियमः सङ्गत एव ॥ ३ ॥

### दर्शयति च ॥ ४ ॥

सर्वे वेदा यत्पदमामनन्तीति श्रुतिर्दर्शयति च विद्यैक्यम् ॥ ४ ॥

### उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

विद्यैक्ये सति गुणोपसंहारः कर्तव्यः, प्रयोजनाऽभेदात्, अग्निहोत्रादिविधिशेषवत् ॥ ५ ॥

### अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायदिति वाजसनेयके श्रूयते, अथ ह य एवायं मुख्यः प्रा-

णस्तमुद्गीथमुपासांचक्रिरे इतिच्छान्दोग्ये च श्रूयते । किमत्र विद्यैक्यमुत तद्भेद इति संशये विद्यैक्यमिति । ननु प्राणस्य वाजसनेयके त्वं न उद्गायेति कर्तृत्वं छान्दोग्ये च तमुद्गीथमिति कर्मत्वमभिधीयतेऽतो विद्यानानात्वमिति चेन्न उपक्रमेऽविशेषात् उद्गीथेनात्ययाम उद्गीथमाजह्रुरनेनैनानभिहनिष्याम इत्युद्गीथस्यैवोपास्यत्वप्रतीतेः । तस्मादुभयत्र विद्यैक्यमिति प्राप्तम् ॥ ६ ॥

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

तत्रोच्यते । न विद्यैकत्वम्, ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथावयवं प्रणवमुपास्यं प्रक्रम्योद्गीथमाजह्रुरिति वचनात् तदवयवभूतः प्रणवः प्राणदृष्टेर्विषयश्छान्दोग्येऽभिहितः । वाजसनेयके त्वविशेषेणोद्गीथेनात्ययामेत्युपक्रमात् कृत्स्नोद्गीथः प्राणदृष्टेर्विषयः । इत्थं प्रक्रमभेदाद्विद्याभेद एव सिद्ध्यति । यथोद्गीथावयवे प्रणवे परमात्मदृष्टिविधानाऽविशेषेऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टविधानमन्यत् ॥ ७ ॥

## सञ्ज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

सञ्ज्ञातो विद्यैक्यमिति चेत्, तस्या दुर्बलत्वं न वा प्रकरणभेदादित्यनेनोक्तम्, सञ्ज्ञैकत्वं तु विधेयभेदेऽप्यस्ति यथाग्निहोत्रसञ्ज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

छान्दोग्ये सर्वासूद्गीथविद्यासु प्रथमं प्रस्तुतस्य प्रणवस्योपास्यत्वेन व्याप्तेरुद्गीथमाजह्रुरिति मध्यगतस्योद्गीथशब्दस्यापि प्रणवविषयत्वं समञ्जसम् । छान्दोग्य उद्गीथावयवः प्रणवः, वाजसनेयके कृत्स्नोद्गीथः प्राणदृष्ट्योपास्य इति विद्याभेदः ॥ ९ ॥

## सर्वाभेदादन्यत्रेमे ॥ १० ॥

छान्दोग्ये वाजसनेयके च प्राणसंवादे ज्यैष्ठ्यश्रैष्ठ्यगुणोपेतः प्राण उपास्यतया वागादयो वसिष्ठत्वादिगुणका उक्ताः । ते च गुणाः प्राणे समर्पिताः । कौषीतकिप्राणसंवादे तु वागादीनां गुणा उक्ता न तु प्राणे समर्पिताः । तत्रोच्यते-अन्यत्र कौषीतकिप्राणसंवादेऽपि

प्राणसम्बन्धित्वेन ते उपादेयाः, ज्यैष्ठ्यश्रैष्ठ्यनिमित्तस्य वागादीनां प्राणायत्तत्वादेः सर्वत्रैक्यात् ॥ १० ॥

आनन्दादयः प्रधानस्य ॥ ११ ॥

सर्वत्र गुणिनोऽभेदादानन्दादयो गुणाः परविद्यासूपसंहर्तव्याः ॥ ११ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

परस्वरूपगुणप्राप्तौ प्रियशिरस्त्वादीनां प्राप्तिस्तु नेष्यते, शिरआद्यवयवभेदे सति ब्रह्मण्युपचयापचयप्रसङ्गात् ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥

आनन्दादयस्तु गुणाः गुणिनः सर्वत्रैकत्वादुपसंह्रियन्ते ॥ १३ ॥

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

तस्य प्रियमेव शिर इत्याद्यभिधानं तु अनुचिन्तनार्थम्, इतरप्रयोजनाभावात् ॥ १४ ॥

आत्मशब्दाच्च ॥ १५ ॥

अन्योन्तर आत्मेत्यत्रात्मनः शिरःपक्षाद्यसम्भवात् तदनुध्यानाय तदभिधानम् ॥ १५ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

अन्योन्तर आत्मेत्यत्रात्मशब्देन परमात्मन एव ग्रहणम् । यथात्मा वा इदमेक एवाग्र आसीदित्यत्रात्मशब्देन परमात्मन एव ग्रहणम्, तद्वत् । सोकामयत बहु स्यामित्यानन्दमयविषयादुत्तरवाक्यादपि तद्ग्रहणम् ॥ १६ ॥

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

पूर्वत्राऽनात्मनि प्राणादावात्मशब्दान्वयदर्शनादात्मानन्दमय इत्यात्मशब्देन परमात्मनोऽपरिग्रह इति चेत्, स्यादेव तेन शब्देन त-

त्परिग्रहः, पूर्वत्रापि परमात्मबुद्ध्यैवानात्मनि प्राणादावात्मशब्दान्वयनिश्चयात् ॥ १७ ॥

## कार्याख्यानादपूर्वम् ॥ १८ ॥

अशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदन्नमनग्नं कुरुते—इत्यादिनाऽपां प्राणवासस्त्वध्यानमप्राप्तं विधीयते, स्मृत्याचारप्राप्तस्याचमनस्य तु तत्रानुवादमात्रत्वात् ॥ १८ ॥

## समान एवं चाभेदात् ॥ १९ ॥

वाजसनेयिशाखायां सत्यं ब्रह्मेत्युपासीतेत्यारभ्यात्मानमुपासीत मनोमयमित्याद्यग्निरहस्ये मनोमयोयं पुरुष इत्यादिबृहदारण्यके च शाण्डिल्यविद्याम्नाता । सा च यथा ऽनेकशाखासु वेद्यैकाद्विद्यैक्यम्, तथैकस्यामप्येकैव । विद्यैक्याद् गुणोपसंहारः ॥ १९ ॥

## सम्बन्धादेवमन्यत्रापि ॥ २० ॥

यथा शाण्डिल्यविद्यैक्यं तत्सम्बन्धाद् गुणोपसंहारः, एवं सत्यं ब्रह्मेत्युपक्रमादेकविद्यात्वसम्बन्धात् तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्ममिति श्रुत्युक्ते द्वे नाम्नी उपसंह्रियेते इति पूर्वः पक्षः ॥ २० ॥

## न वा विशेषात् ॥ २१ ॥

सिद्धान्तस्तु स्थानभेदादुपसंहारो नोपपद्यत इति ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

तस्यैतस्य तदेव रूपं यदमुष्य रूपमिति श्रुतिश्चाक्ष्यादित्यस्थयोः गुणोपसंहाराभावं दर्शयति ॥ २२ ॥

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततानेत्यादिना तैत्तिरीयकविहितानां सम्भृतिद्युव्याप्तिप्रभृतीनां गुणानामपि स्थानभेदादेव विद्यान्तरे नोपसंहारः ॥ २३ ॥

पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

पुरुषो वाव यज्ञ इत्यादिना छान्दोग्ये तस्यैवं विदुषो यज्ञस्येत्यादिना तैत्तिरीयके च श्रूयमाणायां पुरुषविद्यायामपि एकत्रोक्तानां तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमित्यादीनां प्रकाराणामन्यत्राऽनाम्नानाद्विद्याभेदः ॥ २४ ॥

वेधाद्यर्थभेदात् ॥ २५ ॥

सर्वं प्रविध्य हृदयं प्रविध्येत्यादिमन्त्राणां देवा ह वै सत्रं निषेदुरित्यादिनोक्तानां प्रवर्ग्यादिकर्मणां च न विद्यायामुपसंहारः । कुतः । वेधादीनामर्थानां विद्याभिन्नत्वात् ॥ २५ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

तदा विद्वान् पुण्यपापे विधूयेत्यादिश्रुतिप्रोक्तायां पुण्यपापविमोचनात्मिकायां तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति विद्वत्त्यक्तपुण्यपापग्रहणभूतमुपायनमुपसंह्रियते । कुतः शाखान्तरीयोपायनशब्दस्य हानिशब्दशेषत्वात् । यथा कुशा वानस्पत्या इति कुशानां वानस्पत्यत्वप्रकाशकवाक्यशेषतामौदुम्बरा इति वाक्यं भजते, यथा च च्छन्दोभिः स्तुवीतेति वाक्यशेषतां देवच्छन्दांसि पूर्वाणीतिवाक्यं भजते, यथा च हिरण्येन षोडशिनः स्तोत्रमुपाकरोतीति वाक्यशेषतां समयाध्युषिते सूर्ये इति वाक्यं गच्छति, यथा च ऋत्विज उपगायन्तीत्यस्य नाध्वर्युरुपगायतीति शेषतामापद्यते अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्येत्युक्तं जैमिनिनापि ॥ २६ ॥

साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

शरीरादपक्रमणवेलायां निःशेषतया पापपुण्यहानिः । कुतः । शरीरवियोगात्पश्चात्ताभ्यां तर्त्तव्यभोगाभावात् । एवमेवान्येऽधीयते—अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः, एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इत्यादि ।

एवं सति देहवियोगसमये जात एव कर्मक्षयो विरजां नदीं तां मनसात्येति तत्सुकृतदुष्कृते विधूनुते इति नदीतरणानन्तरं पठ्यते ॥ २७ ॥

छन्दत उभयाविरोधात् ॥ २८ ॥

विदुषः पुण्यं पापं क्रमात् सुहृद् दुर्हृच्च च्छन्दतः प्राप्नोति, एवमुभयाविरोधो भवति ॥ २८ ॥

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

सुकृतदुष्कृतयोरविशेषतया निवृत्त्या गतेरर्थवत्त्वम् । यदि सुकृतमनुवर्तेत, तदा तत्फलभोगानन्तरमावृत्तिः स्यात् । एवं सत्यऽनावृत्तिश्रुतिविरोधो भवेत् ॥ २९ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

ब्रह्मोपासकस्य शरीरवियोगकाले सर्वकर्मक्षयेपि पन्था उपपन्नः । कुतः परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत् क्रीडन् रममाण इत्यादिषु देहादिसम्बन्धलक्षणार्थोपलब्धेः । यथा भूपसेवकस्य भौमार्थसिद्धिस्तद्वत् । सस्थूलशरीरसर्वकर्मक्षयेपि विद्याप्रभावाद्विशिष्टस्थानगमनार्थं सूक्ष्मशरीरमनुवर्तते । तद्वियोगानन्तरमुक्तश्रुतिप्रोक्तं रूपं विद्वान् प्राप्य ब्रह्मभावापन्नो भवतीति भावः ॥ ३० ॥

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

उपकोसलविद्यापञ्चाग्निविद्यादिषु श्रूयमाणा गतिस्तद्विद्यावतामेवेति नियमो न, किं तु सा ब्रह्मोपासीनानां सर्वेषाम् । तथा हि गतेः सर्वसाधारणत्वे सति य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेर्चिषमभिसम्भवन्ति ।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥

इत्यादिश्रुतिस्मृतिभ्यामविरोधः ॥ ३१ ॥

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

वसिष्ठादीनां त्वधिकारफलकर्मवशाद्यावदधिकारमवस्थितिः॥३२॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौ-
पसदवत् तदुक्तम् ॥ ३३ ॥

एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्व-मित्यक्षरसम्बन्धिनीनामस्थूलत्वादिधियां ब्रह्मविद्यासु सर्वासु परिग्रहः। कुतः सर्वत्राक्षरस्य ब्रह्मणः प्रधानस्य समानत्वाद्, गुणानां चास्थूलत्वादीनां तत्स्वरूपानुसन्धानान्तर्भावाच्च। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु सामवेदपठितस्य मन्त्रस्याऽग्नेर्वेहोत्रमित्यादेर्याजुर्वेदिकेन स्वरेण प्रयोगः क्रियते। तदुक्तम्—गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इति ॥ ३३ ॥

इयदामननात् ॥ ३४ ॥

अस्थूलत्वादिविशेषितैरानन्दादिभिः सर्वोत्कृष्टब्रह्मचिन्तनाख्येतोरियदानन्दादिकं सर्वत्रानुवर्तनीयम् । प्रधानानुवर्त्तिनोपि सर्वकर्मत्वादयो यत्रोक्तास्तत्रानुसन्धेयाः ॥ ३४ ॥

अन्तरा भूतग्रामवत् स्वात्मनोन्यथा भेदानुपप-
त्तिरिति चेन्नोपदेशान्तरवत् ॥ ३५ ॥

ननु बृहदारण्यके यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्युषस्तप्रश्ने यः प्राणेन प्राणिति स ते आत्मा सर्वान्तर इत्यादिप्रतिवचनम्। तत्र अन्तरा स ते आत्मा सर्वान्तर इति देहाद्यन्तरत्वेन प्रत्यगात्मसम्बन्ध्युपदेशः, तस्यैव प्राणनादिहेतुत्वात्। तथैव तत्र यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेति कहोलप्रश्ने योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यादिप्रतिवचनम्। तत्र तु परमात्मविषय उपदेश इति विद्याभेदः। इतरथा प्रतिवचनभेदानुपपत्तिरिति चेत् न उभयत्र मुख्यस्यैव सर्वान्तर्यामिणः प्रश्नप्रतिवचनयोर्विषयत्वात्। यथा सद्विद्यायां सतः पर-

आत्मनस्तत्तद्गुणप्रतिपादनाय भगवांस्त्वेव मे तद् ब्रवीतु भूय एव मा भगवान् विज्ञापयत्विति प्रश्नस्य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यमिति प्रतिवचनस्य चावृत्तिर्दृश्यते। तद्वदत्रापि वेद्यस्याशनाया-द्यतीतत्वप्रतिपादनाय प्रश्नप्रतिवचनावृत्तिरुपपद्यते ॥ ३५ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

सर्वप्राणिप्राणनादिहेतुत्वेन जीवाद्यावृत्तस्य परस्यानुसन्धानमुषस्तत्कहोलेनापि कार्यम्, तथाशनायाद्यतीतत्वेन जीवाद्यावृत्तस्य कहोलवदुषस्तेनापि कार्यम्—एवमन्योन्यमनुसन्धानव्यत्ययः। एवं सति जीवाद् ब्रह्म व्यावृत्तं भवति। यतो याज्ञवल्क्यप्रतिवचनान्युभयत्रैकं सर्वात्मानमुपास्यं विशिंषन्ति, यथा सद्विद्यायामेकमेव सद्ब्रह्म सर्वाणि प्रतिवचनानि विशिंषन्ति ॥ ३६ ॥

## सैव हि सत्यादयः ॥ ३७ ॥

सैव सच्छब्दाभिहिता सेयं देवतैक्षत तत्तेजः परस्यां देवतायामिति प्रकृतैव खलु यथा सोम्य मधु मधुकृतो निस्तिष्ठन्तीत्यादिपर्यायेष्वनुवर्तते, येतदात्म्यमिदं सर्वं तत्सत्यमिति प्रथमपर्यायपठिता एव सत्यादयः सर्वेषु पर्यायेषूपसंह्रियन्ते ॥ ३७ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमित्युपक्रम्यैष आत्मापहतपाप्मेत्यादिना सत्यकामत्वादिगुणवतश्छान्दोग्ये स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान इति वशित्वादिगुणवतः परमात्मन उपास्यत्वं वाजसनेयके च श्रूयते। इहोभयत्र विद्यैक्यं यतः, सत्यकामत्वादि वाजसनेयके वशित्वादि च छान्दोग्ये ग्रहीतव्यम्। कुतः। आयतनाद्यविशेषात् ॥ ३८ ॥

## आदरादलोपः ॥ ३९ ॥

आदरादाम्नातानां सत्यकामत्वादीनां प्रतिषेधो नास्ति, नेह ना-

नेति प्रतिषेधस्याब्रह्मात्मकपदार्थपरत्वात् ॥ ३९ ॥

## उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

उक्तलक्षणया ब्रह्मोपासनया ब्रह्मोपसम्पन्ने सर्वलोकेषु कामचारो भवति । ननु तत्तल्लोकप्राप्तिसङ्कल्पपूर्वकं तत्साधनानुष्ठानं विना कुतः सर्वत्र कामचारः । तत्रोच्यते, उपसम्पत्तेरेव हेतोः । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवतीतिवचनात् ॥ ४० ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४१ ॥

ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिकर्माङ्गाश्रयोपासनस्य कर्मस्वऽनियमः । कुतः । तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च नैवं वेदेति श्रुतौ तस्यानियमस्य दर्शनात् । अनुपासकस्यापि प्रणवेन कर्माङ्गभूतेन कर्मणि कर्तृत्वश्रवणादुपासनस्य कर्मस्वऽनियतत्वं निश्चीयते । यतश्च कर्मफलादुपासनस्य पृथक् फलं यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीत्युपलभ्यते ॥ ४१ ॥

## प्रदानवदेव तदुक्तम् ॥ ४२ ॥

दहरस्य गुणिनस्तत्तद्गुणविशिष्टतया गुणचिन्तनेपि चिन्तनमावर्त्तनीयम् । इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजाय[इन्द्राय]स्वराज्ञ इति पुरोडाशप्रदानवत् । तदुक्तं नाना वा देवता पृथग् ज्ञानादिति ॥ ४२ ॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोग्निचित इत्याद्यग्नयः यत्किञ्चेमानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिरिति तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते इत्येवमादिलिङ्गानां बाहुल्याद्विद्यामयक्रत्वङ्गभूता एव । लिङ्गं हि प्रकरणाद् बलीयः । तदपि शेषलक्षणे उक्तं श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति ॥ ४३ ॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥

अथ पूर्वपक्षः । इष्टकाभिरग्निं चिनुत इति विहितस्य क्रियामयस्य पूर्वस्यैवायं विकल्पः प्रकरणात् स्यात् । लिङ्गस्यात्रार्थवादस्थत्वेन बलीयस्त्वाभावात् उक्ता अग्नयः क्रियारूपा एव, मनोग्रहं गृह्णातीतिवत् ॥ ४४ ॥

अतिदेशाच्च ॥ ४५ ॥

तेषामेकैक एव तावान् यावानसौ पूर्व इति पूर्वस्याग्नेर्वीर्यं तेष्वतिदिश्यते । अतस्ते क्रियारूपा एव ॥ ४५ ॥

विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

सिद्धान्ते विद्यात्मका एव ते । कुतः । ते हैते विद्याचिता एवेति निर्धारणात् । अग्नेतेषामङ्गिनो विद्यामयक्रतोस्ते मनसाधीयन्त मनसाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त मनसाशंसन् यत्किंच यज्ञे कर्म क्रियत इत्यादौ प्रतीतेश्च ॥ ४६ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

ते हैते विद्याचिता एवेति श्रुतेः एवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्तीति लिङ्गस्य विद्यया हैवैते एवंविदश्चिता भवन्तीति वाक्यस्य च प्रकरणाद् बलीयस्त्वात् तेषामग्नीनां विद्यामयक्रत्वङ्गताबाधो न ॥ ४७ ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

मनसैषु ग्रहा अगृह्यन्तेत्यादिभ्योऽनुबन्धेभ्यः श्रुत्यादिभ्यश्च विद्यामयक्रतुः पृथगेव, शाण्डिल्यादिविद्यान्तरपृथक्त्ववत् । तथा सति विधिः परिकल्प्यते । दृष्टश्चानुवादस्वरूपे यदेव विद्यया करोतीत्यादौ कल्प्यमानो विधिः । वचनानि त्वपूर्वत्वादित्युक्तं च ॥ ४८ ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोका-

पत्तिः ॥ ४९ ॥

मानसग्रहसामान्यादप्येषां न क्रियामयक्रत्वङ्गत्वम् । विद्यारूपत्वोपलब्धेः । स एष एव मृत्युर्य एतस्मिन् मण्डले पुरुषः अग्निर्वै मृत्युरित्यग्न्यादित्यपुरुषयोर्मनःसादृश्ये न वैषम्यापगमः । नहि लोको गौतमाग्निरित्यग्नेर्लोकापत्तिः ॥ ४९ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥

अयं वाव लोक एषोऽग्निचित इत्यनन्तरेण चास्य शब्दस्य मनश्चिदाद्यग्निविषयस्य ताद्विध्यं मनश्चिदादिरूपाद्येयानामग्न्यङ्गानां भूयस्त्वाद् बहुत्वात् तेषां क्रियाग्निसन्निधावनुबन्धः ॥ ५० ॥

एक आत्मनः शरीरे भावात् ॥ ५१ ॥

उपासनवेलायां बद्धावस्थः प्रत्यगात्मा चिन्तनीयः, शरीरे तदा तादृशस्यैवात्मनः सत्त्वादित्येके ॥ ५ ॥

व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

तन्न । बद्धाकाराद्विलक्षणो मुक्ताकारः प्रत्यगात्मा साधनकालेऽनुसन्धेयः, तादृग्रूपस्यैव मुक्तौ भावित्वात् ध्यानानुरूपपरमात्मप्राप्तिवत् ॥ ५२ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

ओमित्येतदक्षरमुद्गीथमुपासीतेत्येवमाद्या उद्गीथाङ्गप्रतिबद्धा उपासना न स्वशाखास्वेव व्यवस्थिताः । अपि तु प्रतिवेदं सर्वशाखास्वेव प्रतिबध्यन्ते । कुतः । उद्गीथश्रुतेरविशेषात् ॥ ५३ ॥

मन्त्रादिवद्वाऽविरोधः ॥ ५४ ॥

यथा कुटरुरसीतिमन्त्रः यथा वा प्रयाजाः, तद्वदन्यप्रोक्तानामुपासनानामितरत्र योगेऽविरोधः ॥ ५४ ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

वैश्वानरविद्यायां समग्रोपासनस्य प्रशस्तता यथा पौर्णमासा-

दीनां साङ्गानामेकः प्रयोगः, एवं मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यादिका प्रत्यङ्गमुपासने दोषं ब्रुवती समस्तोपासनस्य प्रशस्ततां दर्शयति श्रुतिः ॥ ५५ ॥

## नाना शब्दादिभेदात् ॥ ५६ ॥

शाण्डिल्यविद्यादीनां नानात्वम् । कुतः । तत्तच्छब्दादिभेदात् ॥५६॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

विद्याभेद उक्तस्तत्रानुष्ठानविकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

ब्रह्मप्राप्तिव्यतिरिक्तफलानुष्ठाने ऽनियमो, नियमप्रयोजकपूर्वोक्तहेत्वभावात् ॥ ५८ ॥

## अङ्गेषु यथाश्रयभावः ॥ ५९ ॥

बहुभिर्लिङ्गैः कर्माङ्गाश्रितानामुद्गीथादिविद्यानां नियमेन कर्मसूपादानमित्याक्षिपति । उद्गीथादिष्वाश्रितानां विद्यानामुद्गीथादिवदङ्गभावः ॥ ५९ ॥

## शिष्टेश्च ॥ ६० ॥

उद्गीथमुपासीतेति शासनाच्चोपादाननियमः ॥ ६० ॥

## समाहारात् ॥ ६१ ॥

होतृषदनाद्धेवापि दुरुद्गीथमनुसमाहरतीति प्रणवोद्गीथयोरैक्येन सम्पादनाच्च ॥ ६१ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

तेनेयं त्रयी वर्तते इति गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

नाङ्गाश्रितानां विद्यानामङ्गवत् क्रतुषूपादाननियमः, क्रत्वङ्गभा-

वाश्रवणात् ॥ ६३ ॥

दर्शनाच्च ॥ ६४ ॥

एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षतीति श्रुतौ वेदनानियतताद्दर्शनाच्च ॥ ६४ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे तृतीयाध्यायस्य
तृतीयः पादः ॥ ३ ॥



## तृतीयाऽध्यायस्य चतुर्थः पादः ।

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

ब्रह्मप्राप्तिर्विद्यातः, ब्रह्मविदाप्नोति परमित्यादिशब्दादिति भगवान् बादरायणो मन्यते ॥ १ ॥

### शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥२॥

कर्माङ्गभूतकर्तृसंस्कारद्वारेण विद्यायाः कर्माङ्गत्वम् । कर्तुः कर्मशेषत्वात् फलश्रुतिरर्थवादः । यथा पर्णमयीद्रव्यादिष्वपापश्लोकश्रवणादिफलश्रुति, स्तद्वदिति जैमिनिर्मन्यते ॥ २ ॥

### आचारदर्शनात् ॥ ३ ॥

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे इत्यादिश्रुतिभ्यो जनकादीनामाचारदर्शनात् ॥ ३ ॥

### तच्छ्रुतेः ॥ ४ ॥

यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति विद्यायाः कर्मोपयोगित्वस्य श्रुतेः ॥ ४ ॥

### समन्वारम्भणात् ॥ ५ ॥

तं विद्याकर्मणी समन्वारभेते इति विद्याकर्मणोः साहित्यदर्शनाच्च ॥ ५ ॥

### तद्वतो विधानात् ॥ ६ ॥

विद्यावतः आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य स्वं कुटुम्बे शुचौ देशे स्वाध्यायमधीयान इति कर्मविधानाच्च ॥ ६ ॥

### नियमाच्च ॥ ७ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इत्यादिनियमाच्च ॥ ७ ॥

अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

तत्रोच्यते। जीवात् कर्तुरधिकस्य सर्वेश्वरस्य सर्वनियन्तुर्वेद्यत्वेनोपदेशात् पुरुषार्थोऽत इति भगवतो बादरायणस्य मतम् । एष सर्वेश्वरः अन्तः प्रविष्टः शास्ता जनानां सर्वस्य वशी सर्वस्येशानः तं त्वौपनिषदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्तीत्यादितद्दर्शनात् ॥ ८ ॥

तुल्यं तु दर्शनम् ॥ ९ ॥

विद्याया अकर्माङ्गत्वेऽपि किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे इत्यादिदर्शनं तुल्यम् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥

यदेव विद्ययेति श्रुतिर्न सर्वविद्याविषया ॥ १० ॥

विभागः शतवत् ॥ ११ ॥

तं विद्याकर्मणी समन्वारभेते इत्यत्र फलद्वयनिमित्तशतविभागवद्विभागो ज्ञेयः ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥

आचार्यकुलाद्वेदमधीत्येत्यत्र स्वध्ययनमात्रवतः कर्म विधीयते ॥ १२ ॥

नाविशेषात् ॥ १३ ॥

नियमवाक्यस्यापि नियमेन विद्वद्विषयकत्वायोगात् ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

विद्यास्तुतये विदुषः कुर्वन्नेवेह कर्माणीति कर्मानुज्ञा क्रियते ॥१४॥

कामकारेण चैके ॥ १५ ॥

किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इत्येके विदुषां स्वेच्छया गार्हस्थ्यत्यागमत एवाऽधीयते ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

अत एव विद्यया कर्मोपमर्दं च क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर इत्यादिना पठन्ति ॥ १६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतःस्वाऽऽश्रमेषु विद्यादर्शनाच्च तस्याः स्वातन्त्र्यं निश्चीयते। ते तु त्रयो धर्मस्कन्धा इत्यादिशब्दे दृश्यन्ते ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥

त्रयो धर्मस्कन्धा इत्यादौ तेषामाश्रमाणामनुवादमात्रम, विधायकशब्दाभावात् । वीरहा वा एष देवानां योऽग्निमुद्वासयते इत्याश्रमान्तरापवादश्रवणाच्चाश्रमान्तरमननुष्ठेयमिति जैमिनिः ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

गार्हस्थ्येनाश्रमान्तरस्यानुवादवाक्ये तुल्यत्वश्रवणात् तदनुष्ठेयमिति भगवान् बादरायणो मन्यते ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

विधिरेवास्ति यथादिष्टाग्निहोत्रे श्रूयते अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति वाक्यं भित्त्वोपरिधारणमपूर्वत्वाद्विधीयते, तद्वत् ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

स एष रसानां रसतम इत्यादिकर्माङ्गोद्गीथादिस्तुतिमात्रम, तत्सम्बन्धितया रसतमत्वादेरुपादानादिति चेन्न, अप्राप्तत्वादुद्गीथादिषु रसतमत्वादिदृष्टिविधानम ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

उद्गीथमुपासीतेत्यादिविधिशब्दाच्च ॥ २२ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

वेदान्तेष्वाख्यानश्रुतयः पारिप्लवार्था इति न मन्तव्यम् पारिप्लवमाचक्षीतेत्युक्त्वा मनुर्वैवस्वतो राजेत्यादिना कासाञ्चिद्विशेषितत्वात् ॥ २३ ॥

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

एवं सत्यन्यासां द्रष्टव्य इत्यादिविध्येकवाक्यतयोपबन्धात् ता विद्यार्थाः ॥ २४ ॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

ब्रह्मनिष्ठोऽमृतत्वमेतीत्यादिश्रुतेरूर्ध्वरेतःसु अग्नीन्धनाद्यनपेक्षा विद्यास्ति ॥ २५ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिश्रुतेर्गमनेऽश्ववद्विद्या स्वोत्पत्तौ साधनभूतानि सर्वाणि कर्माण्यपेक्षते ॥ २६ ॥

शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

ब्रह्मजिज्ञासुर्विद्याङ्गभूतस्वाश्रमकर्मणा विद्यानिष्पत्तिसंभवेऽपि शमदमाद्युपेतः स्यात् तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति विद्याङ्गतया शमादिविधेस्तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

न ह वा एवं विदि किञ्चनानन्नं भवतीति सर्वान्नानुज्ञानं प्राणात्ययापत्तावेव प्राणात्यये चाक्रायणो हीभ्योच्छिष्टं भक्षणं कृतवांस्तस्य श्रुतौ दर्शनात् ॥ २८ ॥

अबाधाच्च ॥ २९ ॥

आहारशुद्धौ सत्त्वशुद्धिरित्यस्याबाधाच्च ॥ २९ ॥

## अपि च स्मर्यते ॥ ३० ॥

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
इति स्मर्यते च ॥ ३० ॥

## शब्दाश्चातोऽकामकारे ॥ ३१ ॥

अत एव तस्माद्ब्राह्मणः सुरां न पिबेदिति शब्दो यथेष्टाचारनिवृत्तौ वर्तते ॥ ३१ ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

यद्विद्याङ्गं यज्ञादि तदमुमुक्षुणा चाश्रमकर्मत्वेनाप्यनुष्ठेयं यावज्जीवमग्निहोत्रं जुहोतीति विहितत्वात् ॥ ३२ ॥

## सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारित्वेनापि विविदिषन्ति यज्ञेनेत्यादिना यज्ञादेर्विहितत्वान्मुमुक्षुणाप्यनुष्ठेयं संयोगपृथक्त्वेनोभयार्थत्वसम्भवात् ॥३३॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

उभयार्थतया ते एव यज्ञादयो बोध्याः । उभयत्रैकरूपकर्मप्रत्यभिज्ञानात् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३५ ॥

धर्मेण पापमपनुदतीति श्रुतिः प्रसिद्धैर्यज्ञादिभिरेव विद्याभिभवहेतुभूतपापापनयनेन विद्याया अनभिभवं दर्शयति ॥ ३५ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

आश्रममन्तरा वर्तमानानामपि विद्याधिकारोऽस्ति रैक्वादेर्विद्यानिष्पत्त्यादेर्दर्शनात् ॥ ३६ ॥

## अपि च स्मर्यते ॥ ३७ ॥

जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
इति तेषामपि जपादिना विद्यानुग्रहः स्मर्यते ॥ ३७ ॥

## विशेषानुग्रहश्च ॥ ३८ ॥

जन्मान्तरीयेणापि साधनविशेषेण विद्यानुग्रहः स्मर्यते च । अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गात् ॥ ३९ ॥

अन्तरापवर्तित्वादाश्रमवर्तित्वं ज्यायः अनाश्रमी न तिष्ठेत् त्विति लिङ्गाच्च ॥ ३९ ॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्त-द्रूपाभावेभ्यः ॥ ४० ॥

प्राप्तोर्ध्वरेतोभावस्याभावस्तु नोपपद्यते इति जैमिनेरपि सम्मतं वचनाभावान्निमित्ताभावाच्छिष्टाचाराभावाच्च ॥ ४० ॥

## न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥४१॥

अधिकारिलक्षणे निर्णीतं प्रायश्चित्तं नैष्ठिकस्य न सम्भवति तस्य तदयोगात् ।

आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥ इति स्मृतेः ॥४१॥

## उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥

एके तु नैष्ठिकस्य ब्रह्मचर्यच्यवनमुपपातकमतस्तत्र प्रायश्चित्तं मन्यन्ते उपकुर्वाणवत् तस्य ब्रह्मचारित्वाविशेषात् । मध्वशनादिवत् तदुक्तमुत्तरेषामविरोधीति ॥ ४२ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

नैष्ठिकादीनां स्वाश्रमप्रच्युतेर्महापातकत्वमुपपातकत्वं वाऽस्तूभ-

थापि ते ब्रह्मविद्याधिकाराद्बहिर्भूताः प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महेति स्मृतेः शिष्टाचराच्च ॥ ४३ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

कर्माङ्गाश्रितमुपासनं यजमानकर्तृकमित्यात्रेयः । यदेव विद्ययेति फलश्रुतेः ॥ ४४ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

कर्माङ्गाश्रितमुपासनमृत्विक्कर्तृकं तस्य कर्मणे क्रीतत्वात् ॥ ४५ ॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरित्यत्र मननशीले मौनपदप्रवृत्तिसंभवेऽपि पक्षेण प्रकृष्टमननशीले प्रयोगदर्शनात्। पाण्डित्यबाल्ययोरपेक्षया तृतीयं सहकार्यन्तरं मानं विधीयते यज्ञादिवत् शमादिवच्च ॥ ४६ ॥

कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ४७ ॥

स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते इति गृहिणोपसंहारः सर्वाश्रमधर्मसद्भावात् सर्वधर्मप्रदर्शनार्थः ॥ ४७ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

तथैतस्मिन् वाक्येपि मौनोपदेशः सर्वधर्मप्रदर्शनार्थः। मौनोपदेशावत्त्रयो धर्मस्कन्धा इत्यादिना सर्वाश्रमधर्मोपदेशात् ॥ ४८ ॥

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

पाण्डित्यप्रयुक्तस्वमाहात्म्यादनाविष्कुर्वन् बाल्येन निरहङ्कारभावेन वर्तेत तस्यैवान्वयसम्भवात् ॥ ४९ ॥

## ऐहिकमप्रस्तुते प्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

असति प्रतिबन्धे ऐहिकं विद्याजन्म तस्मिन् सत्यामुष्मिकं मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामित्यादौ तद्दर्शनात् ॥ ५० ॥

## एवं मुक्तिफलाऽनियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

तथा मुक्तिफलाऽनियमस्तस्य तावदेव चिरमिति वचनात् ॥५१ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे तृतीयाध्यायस्य
चतुर्थः पादः ॥ ४ ॥

समाप्तश्च तृतीयाध्यायः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

असकृत् साधनावृत्तिः कर्तव्या श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिब्रह्मदर्शनायोपदेशात् ॥ १ ॥

लिङ्गाच्च ॥ २ ॥

अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय इति स्मृतेश्च ॥ २ ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

एष मे आत्मेति पूर्वे उपगच्छन्ति । एष ते आत्मेति च शिष्याननुपदिशन्ति । अतो मुमुक्षुणा परमपुरुषः स्वस्यात्मत्वेन ध्येयः ॥ ३ ॥

न प्रतीके न हि सः ॥ ४ ॥

प्रतीके त्वात्मानुसन्धानं न कार्यं न स उपासितुरात्मा ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

मन आदौ ब्रह्मदृष्टिर्युक्तैव न तु ब्रह्मणि मन आदिदृष्टिर्ब्रह्मण उत्कर्षात् ॥ ५ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

य एवासौ तपति तमुद्गीथमुपासीतेत्याद्युपासनेषूद्गीथादिष्वादित्यादिमतयः कर्तव्या आदित्यादेरुत्कर्षोपपत्तेः ॥ ६ ॥

आसीनः सम्भवात् ॥ ७ ॥

आसीन एवोपासनमनुतिष्ठेत् तस्यैव तत्संभवात् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥

उपासनस्य ध्यानरूपत्वादासीन एव तदनुतिष्ठेत् ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

ध्यायतीव पृथिवीत्यत्राचलत्वमपेक्ष्य ध्यायतिप्रयोगो वर्त्तते अत आसीन एवोपासनमनुतिष्ठेत् ॥ ९ ॥

स्मरन्ति च ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्येत्यादि स्मरन्ति च ॥ १० ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

यत्र चित्तैकाग्र्यं तत्रोपासीत तदतिरिक्तदेशादिविशेषाश्रवणात् ॥ ११ ॥

आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

उपासनमाप्रयाणात् कार्यं यतस्तत्रापि स खल्वेवं वर्तयन् यावदायुषमित्यादौ तद्दृष्टम् ॥ १२ ॥

तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

विदुष उत्तरपूर्वयोराघयोरश्लेषविनाशौ भवतः । कुत एवं विदि पापं कर्म न श्लिष्यते अस्य सर्वे पाप्मानः प्रदूयन्त इति व्यपदेशात् ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पुण्यस्य काम्यकर्मणोपि अघवन्मुक्तिविरोधित्वादुत्तरस्याश्लेषः पूर्वस्य विनाश एव उत्तरपूर्वयोरश्लेषविनाशानन्तरं देहपाते सति मुक्तिरेव ॥ १४ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

विद्याप्राप्तौ पूर्वे पापपुण्ये ऽप्रवृत्तफले एव क्षीयेते कुतस्तस्य तावदेव चिरं यावन्न विमोक्षे अथ सम्पत्स्ये इति शरीरपातावधि श्रवणात् ॥ १५ ॥

अग्निहोत्रादि तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

विद्ययाग्निहोत्रदानतपआदीनां स्वाश्रमकर्मणां निवृत्तिशङ्का नास्ति विद्यापोषकत्वादनुष्ठेयान्येव यज्ञादिश्रुतौ तेषां विद्योत्पादकत्वद-र्शनात् ॥ १६ ॥

अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अस्मात् प्राप्तविषयात् कर्मणो विद्योत्पादकादिरूपादन्याप्यलब्ध-विषया कृत्यास्ति तद्विषयमेकेषां सुहृदः साधुकृत्यां द्विषन्तः पापकृ-त्यामित्युभयोः पुण्यपापयोर्विभागवचनम् ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥

कर्मणः प्रबलत्वदुर्बलत्वसूचनार्थमिदमुच्यते यदेव वि-द्ययेति हि ॥ १७ ॥

भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥

विद्वानारब्धकार्ये तु सुकृतदुष्कृते भोगेन क्षपयित्वा ब्रह्म सं-पद्यते ॥ १९ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे चतुर्थाध्यायस्य
प्रथमः पादः ॥ १ ॥

चतुर्थाध्याये द्वितीयः पादः ।

## वाङ् मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

वाङ् मनसि सम्पद्यत इति वागिन्द्रियस्य मनसि संयोगरूपा सम्पत्तिरुच्यते वागिन्द्रिये उपरते ऽपि मनःप्रवृत्तिदर्शनाद् वाङ् मनसि सम्पद्यते इति शब्दाच्च ॥ १ ॥

## अत एव सर्वाण्यनु ॥ २ ॥

वाचमनु सर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते तथा दर्शनादिन्द्रियैर्मनसि सम्पद्यमानैरिति शब्दाच्च ॥ २ ॥

## तन्मनः प्राणः उत्तरात् ॥ ३ ॥

तच्च प्राणेन संयुज्यते मनः प्राण इत्युत्तरशब्दात् ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

प्राणो जीवेन संयुज्यते कुत एवमेव ममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति तमुत्क्रामन्तं प्राणोनुत्क्रामति कस्मिन् वा प्रतिष्ठिते प्रतिष्ठितः स्यामिति तदुपगमादिबोधकवाक्येभ्यः जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरिति फलितोर्थः ॥ ४ ॥

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

सा च जीवसंयुक्तस्य तस्य तेजःसहितेषु भूतेषु भवति पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात् ॥ ५ ॥

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिँस्तु सा न सम्भवति तासां त्रिवृत्तमेकैकां करवाणि नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नश इति श्रुतिस्मृती एकैकस्य कार्याक्षमत्वं दर्शयतः ॥ ६ ॥

## समानाचाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विश्वगन्या उत्क्रमणे भवन्तीति नाडीविशेषेण विदुषोऽप्युत्क्रमस्य गतिः श्रूयते । एवं सति विदुषो नाडीप्रवेशलक्षणगत्युपक्रमात् प्रागुत्क्रान्तिः समानैव। यत्तु यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतो भवतीति विदुष इहैवाऽमृतत्वं श्रूयते तद्देहेन्द्रियादिसम्बन्धमदग्ध्वैवोत्तरपूर्वाघाश्लेषविनाशलक्षणमुपपद्यते ॥ ७ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तदमृतत्वं देहसम्बन्धमदग्ध्वैव बोध्यम् । कुतः तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति आविमुक्तेः संसारव्यपदेशात् ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

सूक्ष्मं शरीरमनुवर्त्तते विदुषस्तं प्रति ब्रूयात् सत्यं ब्रूयादिति प्रमाणतस्तद्भावोपलब्धेः ॥ ९ ॥

## नोपमर्देनातः ॥ १० ॥

अतोऽथ मर्त्योऽमृतो भवतीति देहसम्बन्धोपमर्देनाऽमृतत्वं वदति ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

स्थूलदेहे सूक्ष्मदेहस्यैव धर्मभूतः ऊष्मोपलभ्यते तस्मिन्नसति तदनुपलब्धेरित्युपपत्तेः ॥ ११ ॥

## प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ १२ ॥

अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्तीति विप्रतिषेधाद्विदुष उत्क्रान्तिरनुपपन्नेति चेन्नायं विरोधः । यतोऽयं प्राणानामुत्क्रान्तिप्रतिषेधः प्रकृताच्छारीरात् न तस्मात् प्राणा उत्क्रामन्तीति स्पष्ट एकेषां पाठे तस्मादेव तेषामुत्क्रान्तिप्रतिषेधः श्रूयते ॥ १२ ॥

स्मर्यते च ॥ १३ ॥

सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै ।
जगाम भित्वा मूर्द्धानं दिवमभ्युत्पपातह ॥
इति विदुष उत्क्रान्तिः स्मर्यते ॥ १३ ॥

तानि परे तथाह्याह ॥ १४ ॥

तेजःप्रभृतिभूतसूक्ष्माणि परस्मिन् सम्पद्यन्ते । तेजः परस्यां देवतायामित्याह श्रुतिः ॥ १४ ॥

अविभागो वचनात् ॥ १५ ॥

तेषां वागादिभूतसूक्ष्मान्तानां परेऽविभागस्तादात्म्यापत्तिः । भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते इति वचनात् ॥ १५ ॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्
तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः
शताधिकया ॥ १६ ॥

शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमाऽऽयन्नमृतत्वमेतीति श्रुत्युक्ता नाडी वर्त्तते । तां विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च प्रसन्नेन वेद्येनानुगृहीतो यदा भवति ततस्तस्योको हृदयमग्रज्वलनं भवति तदा परमेश्वरप्रकाशितद्वारस्तां विदित्वा विद्वान् तया निष्क्रामति ॥ १६ ॥

रश्म्यनुसारी ॥ १७ ॥

विद्वान् मूर्द्धन्यया नाड्या निष्क्रम्य सूर्य रश्मीननुसार्यैवोर्ध्वं गच्छति तैरेव रश्मिभिरित्यवधारणात् ॥ १७ ॥

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्
दर्शयति च ॥ १८ ॥

निशि मृतस्य विदुषो न परप्राप्तिरिति न वाच्यं यावद्देहभावि-

त्वाद्दर्शयति च। निशि मृतस्य विदुषो न परप्राप्तिरिति न वाच्यं यावद्देहभाविकर्मसम्बन्धापगमात् तस्मात् तत्प्राप्तिः स्यादेव तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति श्रुतेः ॥ १८ ॥

अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

उक्तहेतोर्दक्षिणायनेऽपि मृतस्य विदुषो ब्राह्मप्राप्तिः ॥ १९ ॥

योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २० ॥

यत्र काले त्वनावृत्तिरित्यादिना च योगिनः प्रति स्मृतिद्वयं स्मर्यते ते चैते स्मरणार्हे अतो न कालविशेषनियमः ॥ २० ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे चतुर्थाध्यायस्य
द्वितीयः पादः ॥ २ ॥

चतुर्थाध्याये तृतीयः पादः।

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

एक एव मार्गोऽर्चिरादिर्ज्ञेयोऽतस्तेनैव विद्वांसो गच्छन्ति ते अर्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मांसांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते इति छान्दोग्ये तेर्चिषमभिसम्भवन्ति अर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङादित्यमेति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्विद्युतं तान् वैद्युतात् पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयतीति बृहदारण्ये अन्यत्रापि तथैव प्रसिद्धेः ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

छान्दोग्यश्रुतिपठितात् संवत्सरादूर्ध्वमादित्यात् पूर्वमाग्निलोकमागच्छति स वायुलोकमिति कौषीतकिश्रुत्युक्तं वायुमभिसम्भवन्ति अविशेषविशेषाभ्याम् अग्निलोकमागच्छति स वायुलोकमित्यत्र वायोरविशेषणोपादिष्टत्वात् तस्मै तत्र विजिहीते यथा रथचक्रस्य खं तेनस ऊर्ध्वमाक्रमते स आदित्यमागच्छतीत्यत्र विशेषावगमाच्च ॥ २ ॥

## तडितोधिवरुणः सम्बन्धात् ॥ ३ ॥

स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति कौषीतकिश्रुत्युक्तो वरुणश्चन्द्रमसो विद्युतमिति छान्दोग्यश्रुत्युक्तविद्युत उपरि तेजो विद्युद्वरुणसम्बन्धादिन्द्रप्रजापती च तदग्रे योज्यौ ॥ ३ ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

अर्चिरादयो गन्तॄणां गमयितारः स एतान् ब्रह्म गमयतीत्यमानव-

स्य गमयितृत्वश्रवणात् पूर्वेषामपि गमयितृत्वं गम्यते ॥ ४ ॥

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

विद्युत उपरिष्टादमानवेनैव विद्वान्नीयते वरुणादयस्तु साहित्येनोपकारकाः ॥ ५ ॥

कार्यं वादरिरस्य गत्युपपत्तेः ॥ ६ ॥

अर्चिरादिगणः कार्यं ब्रह्म तदुपासकान्नयति कार्यस्य ब्रह्मण एव गत्युपपत्तेरिति वादरिर्मन्यते ॥ ६ ॥

विशेषितत्वाच्च ॥ ७ ॥

तेषु ब्रह्मलोकेषु पराः परावन्तो वसन्तीति लोकशब्दबहुवचनाभ्य विशेषितत्वाच्च ॥ ७ ॥

सामीप्यात् तु तद्व्यदेशः ॥ ८ ॥

प्रथमजत्वेन ब्रह्मसामीप्यात्तु ब्रह्म गमयतीति व्यपदेश उपपद्यते ॥८॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

कार्यब्रह्मलोकनाशे कार्यब्रह्मणा सह कार्यब्रह्मणः परं प्राप्नोति ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे इत्यभिधानात्॥९॥

स्मृतेश्च ॥ १० ॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति स्मृतेश्चोक्तार्थोवगम्यते ॥ १० ॥

परं जैमिनिर्मुख्यत्वात् ॥ ११ ॥

परं ब्रह्म नयति एतान् ब्रह्म गमयतीति ब्रह्मशब्दस्य परस्मिन् मुख्यत्वात् ॥ ११ ॥

दर्शनाच्च ॥ १२ ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इति परप्राप्यत्वदर्शनाच्च ॥ १२ ॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १३ ॥

प्रजापतेः सभां वेश्म प्रपद्ये इत्ययं प्राप्तिसङ्कल्पः कार्यब्रह्मविषयको न किन्तु परमात्मविषयकस्तस्यैवाधिकारात् ॥ १३ ॥

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १४ ॥

अर्चिरादिगणः प्रतीकालम्बनव्यतिरिक्तात् परब्रह्मोपासकान् ब्रह्मात्मकतयाऽक्षरस्व रूपोपासकांश्च परं ब्रह्म नयति कुत उभयथा दोषात् कार्योपासकान्नयतीत्यत्रास्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्येत्यादिश्रुतिव्याकोपः स्यात् परोपासीनानेव नयतीति नियमे तु तद्य इत्थंविदुर्ये चेमेरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति श्रुतिव्याकोपः स्यात् तस्माद्यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथैतः प्रेत्य भवतीत्यादिश्रुतेस्तत्क्रतुस्तथैव प्राप्नोतीति सिद्धान्तो भगवान् बादरायणो मन्यते ॥ १४ ॥

## विशेषं च दर्शयति ॥ १५ ॥

यावन्नाम्नोगतं तत्रास्य यथा कामचारो भवतीत्यादिका श्रुतिः प्रतीकोपासकस्य गत्यनपेक्ष्यं फलविशेषं च दर्शयति ॥ १५ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे चतुर्थाध्यायस्य
तृतीयः पादः ॥ ३ ॥

चतुर्थाध्याये चतुर्थः पादः ।

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

जीवोऽर्चिरादिकेन मार्गेण परं सम्पद्य स्वाभाविकेन रूपेणाविर्भवतीति परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति वाक्येन प्रतिपाद्यते स्वेनेति शब्दात् ॥ १ ॥

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

बन्धाद्विमुक्त एवात्र स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते कुतो य आत्माऽपहतपाप्मेत्युपक्रम्य एतं त्वेव ते भूयोनुव्याख्यास्यामीति प्रतिज्ञानात् ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

आत्मैवाविर्भूतरूपस्तत्प्रकरणात् ॥ ३ ॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

मुक्तः परस्मादात्मानं विभागविरोधिनाविभागेनानुभवति तत्त्वस्य तदानीमपरोक्षतो दृष्टत्वाच्छास्त्रस्याप्येवं दृष्टत्वात् ॥ ४ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

अपहतपाप्मत्वादिब्राह्मेण गुणेन युक्तः प्रत्यगात्माविर्भवतीति जैमिनिर्मन्यते दहरवाक्ये ब्रह्मसम्बन्धितया श्रुतानामपहतपाप्मत्वादीनां प्रजापतिवाक्ये प्रत्यगात्मसम्बन्धितयाप्युपन्यासादिना लक्षणादिभ्यश्च ॥ ५ ॥

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

ब्रह्मणि चिद्रूपे उपसन्नः प्रत्यगात्मा चिन्मात्रेण रूपेणाविर्भवति प्रज्ञानघन एवेति तस्य तदात्मकत्वश्रवणादित्यौडुलोमिर्मन्यते ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि अपहतपाप्मत्वादिमद्विज्ञा-

नस्वरूपाविर्भावादविरोधं भगवान् बादरायणो मन्यते कुतो मुक्तजीवसम्बन्धितयाऽपहतपाप्मत्वाद्युपन्यासात् ॥ ७ ॥

संकल्पादेव तच्छ्रुतेः ॥ ८ ॥

मुक्तस्य संकल्पादेव पित्रादिप्राप्तिः कुतः स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति तदभिधानश्रुतेः ॥ ८ ॥

अत एवानन्याधिपतिः ॥ ९ ॥

परब्रह्मात्मको मुक्त आविर्भूतसत्यसंकल्पत्वादेवानन्याधिपतिर्भवति स स्वराड् भवतीति श्रुतेः ॥ ९ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥

मुक्तस्य शरीराद्यभावं बादरिर्मन्यते । यतोऽशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतिस्तथैवाह ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

तच्छरीरादिभावं जैमिनिर्मन्यते कुतः स एकधा भवति त्रिधा भवतीत्यादित्रैविध्यामननात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

संकल्पादेव शरीरत्वमशरीरत्वं च मुक्तस्य भगवान् बादरायणो मन्यते द्वादशाहस्य यथा द्वादशाहमृद्धिकामा उपेयुः । द्वादशाहेन प्रजाकामं याजयेदिति सत्रत्वमहीनत्वं भवति तद्वत् ॥ १२ ॥

तन्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥

स्वसृष्टशरीराद्यभावे स्वप्नवद्भगवत्सृष्टशरीरादिना मुक्तभोगोपपत्तेः शरीरादेर्मुक्तसृज्यत्वानियमः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

स्वसृष्टशरीरादिभावेऽपि मुक्तस्य भगवल्लीलारसभोगोपपत्तेः कदाचिद्भगवल्लीलानुसारिणा स्वसंकल्पेनापि सृजति ॥ १४ ॥

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥

प्रभया दीपस्येव ज्ञानेन धर्मभूतेन जीवस्यानेकशरीरेष्वावेशो भवति स चानन्त्याय कल्पत इति श्रुतिस्तथाहि दर्शयति ॥ १५ ॥

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति वाक्यं तु न मुक्तविषयं किं तु सुषुप्त्युत्क्रान्त्योरन्यतरापेक्षम्। न खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानीति एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति च स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन्निति च जीवस्योभयत्र निर्बोधत्वं मुक्त्यवस्थायां च सर्वज्ञत्वं शास्त्रेणाविष्कृतम् ॥ १६ ॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

जगत्सृष्ट्यादिव्यापारेतरं मुक्तैश्वर्यं कुतो यतो वा इमानि भूतानि जायन्त इत्यादौ परब्रह्मप्रकरणान्मुक्तस्य तत्रासन्निहितत्वाच्च ॥ १७ ॥

## प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवतीत्यादिश्रुत्या मुक्तस्य जगद्व्यापारप्रतिपादनाज्जगद्व्यापारवर्जमिति तदुक्तं तन्नेति चेन्न। तया श्रुत्या हिरण्यगर्भादिलोकस्थानां भोगानां मुक्तानुभवविषयतयोक्तत्वात् ॥ १८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

जन्मादिविकारशून्यं स्वाभाविकाचिन्त्यानन्तगुणसागरं सविभूतिकं ब्रह्मैव मुक्तोऽनुभवति तथाहि मुक्तस्थितिमाह श्रुतिः। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये निरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीत्यादिका ॥१९॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

कृत्स्नजगत्सृष्ट्यादिव्यापारार्हं ब्रह्मैव सकारणं करणाधिपाधिपः

सर्वस्य वशी सर्वस्येशानो मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति श्रुतिस्मृती दर्शयतो जगद्व्यापारवर्जं मुक्तैश्वर्यम् ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

सो ऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति भोगमात्रसाम्यलिङ्गाच्च मुक्तैश्वर्यं जगद्व्यापारवर्जम् ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

परं ज्योतिरूपं सम्पन्नस्य संसाराद्विमुक्तस्य प्रत्यगात्मनः पुनरावृत्तिर्न भवति कुत एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत इति शब्दात् ॥ २२ ॥

इति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे
वेदान्तपारिजातसौरभे चतुर्थाध्यायस्य
चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ।

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या-जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः । ९

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः । ४

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ३

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः २

(३५) वेदान्तपारिजातसौरभं नाम मीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः,
चौखम्बा, बनारस सिटी.